इति संप्रश्नसंपृष्टो विप्राणां रौमहर्षणिः ॥ प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १ ॥

शौनकादिविप्राणामिति पूर्वोक्तैः षड्भिः समीचीनैः प्रश्नैः सम्यक् पृष्टः रोमहर्षणस्य अपत्यं-रौमहर्षणिः-सूतस्तेषां-शौनकादीनां वचः प्रतिपूज्य प्रवक्तुं-व्याख्यातुं उपचक्रम इत्येकान्वयः । एतद्व्यासवचनं ॥ १ ॥

ईप्रकार शौनकादि ब्राह्मणरिंद योग्यवाद प्रश्नगळन्नु केळल्पट्ट रोमहर्षणन मगनाद सूतनु अवर प्रश्नगळन्नु श्लाघन माडि अवुगळ उत्तरवन्नु हेळलिक्के प्रारंभ माडिदनेंदु व्यासरु अन्नुत्तारे ॥ १ ॥

## सूत उवाच—यं प्रव्रजंतमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ॥
## पुत्रेति तन्मयतया तरवोपि नेदुस्तं सर्वभूतहृदयं मुनिमानतोस्मि ॥ २ ॥

शौनकादिप्रश्नपरिहारतया भागवतपुराणं व्याकर्तुकामः गुरुश्रवाः स्वेष्टगुरुं रुद्रावतारं श्रीशुकमुनिं प्रणमति यमिति । विरहकातरः-पुत्रवियोगे कातरः, अधीरइव स्थितः स द्वैपायनो यदा प्रव्रजंतमनुपेतं अपेतकृत्यं पुत्रेत्याजुहाव तदा तन्मयतया तरवोपि नेदुः, अहं सर्वभूतहृदयं मुनिं सर्वज्ञमानतोस्मीत्येकान्वयः ॥

शौनकादि ब्राह्मणर प्रश्नगळिगे उत्तर कोडुवदक्कागि श्रीमद्भागवतपुराणद अर्थवन्नु हेळलिच्छिसुव ' गुरुश्रवस् ' एंब हेसरुळ्ळ सूतनु तन्न इष्ट गुरुवाद, रुद्रन अवतारनाद श्रीशुकमुनियन्नु नमस्कारिसुत्ताने—मगनु अगलि होगुवनेंदु अधैर्यवुळ्ळवनंतिद्द द्वैपायननु, कृतकृत्यनाद, देह मोदलादवुगळ अभिमानरहितनाद, सर्वसंग-परित्यागमाडुव याव मगनन्नु पुत्रने, एंदु करियलु, अहंकारतत्त्वक्के अभिमानियागि, एल्ल वस्तुगळलि अवनु व्यापनाद्दरिंद गिडगळु सह उत्तररूपवागि ध्वनियन्नु माडिदवो, एल्ल प्राणिगळलिद्द आ सर्वज्ञनाद शुकमुनियन्नु नमस्कारिसुत्तेने.

द्वीपो-नदीमध्यप्रदेशः, स अयनमालयः यस्य सः तथा द्वीपायनः सएव द्वैपायनः । द्वीपस्यापत्यं द्वैपायनः । नदी द्वीपे समुत्पन्नत्वात्तद-पत्यत्वनिर्देश औपचारिकः । तद्वत्पराशरसुतत्वमप्यौपचारिकमिति ज्ञापयितुं एतदेव प्रसिद्धनामाकरोत् । प्रव्रजंतं-सर्वपरित्यागरूपमाश्रममाश्रयंतं ।

तत्र कारणमाह अनुपेतं-देहाद्यभिमानशून्यं, अनुपेतं-केनापि सख्या रहितमेकाकिनमिति वा, नचोपनयनशून्योऽनुपेतः, अनुपनीतस्य प्रव्रजनायोगात् । नच प्रव्रजनं-संन्यासः, किंतर्हि प्रकर्षेण गमनमेवेति वाच्यं । यदहरेव विरजेत्तदहरेव प्रव्रजेदिति गौतमसूत्रविरोधात् । अपगतं कृत्यं यस्मात्सोपेतकृत्यस्तं कृतकृत्यं, अपेतं-निराकृतं कृत्यं-छेदनकर्म येन स तथा । अवाप्ताहिंसालक्षणाश्रमत्वात्तमिति वा । पुत्रेति दूरादाव्हाने प्लुताभावश्छांदसः । सर्वगतत्वज्ञापनाय वा ॥

द्वीपवे मनेयागिवुळ्ळवनु द्वीपायननु; अवनिगेवे द्वैपायननेन्नुवरु; अथवा द्वीपदल्लि हुट्टिदवनादद्दरिंद द्वैपायननु; द्वीपदल्लि हुट्टिदु ह्यागे औपचारिकवो अदेप्रकार पराशरन मगनेंबदादरू औपचारिकवेंदु तोरिसुवदक्कागि द्वैपायननेंब हेसरन्ने प्रसिद्धिपडिसिरुवरु. प्रव्रजंतं—सर्वसंगपरित्यागरूपवाद आश्रमवन्नु आश्रयमाडुव. अदक्के कारणवन्नु हेळुवरु, अनुपेतं-देह मोदलादवुगळ अभिमानरहितनाद अथवा यारू मित्ररिल्लद, अथवा ओब्बने आद. परकीयरु ‘ उपनयनविल्लदवनु अनुपेतनु ’ एंदु हेळुवदु सरियल्ल, यांकेंदरे उपनयनवागदेइद्दवनिगे संन्यासवु संभविसुवदिल्ल; हागादरे अवरु प्रव्रजनवेंदरे सन्यासवल्लेंदु अंदरे अदर अर्थवेनु? बहळ तिरगोणवेंदरे अदु सरियागुवदिल्ल, यांकेंदरे “ ब्राह्मणनु याव दिवस विरक्तनागुवनो अदे दिवसवे देहाभिमान परित्यागलक्षण आश्रमवन्नु तेगेदुकोळबेकु ” एंब गौतमसूत्रक्के विरुद्धवागुवदु. अपेतकृत्यं-यावनिंद माडतक्क केलसगळु दूरागिरुववु अंदरे कृतकृत्यनादवनु अथवा छेदनकर्मवु यावनिंद बिडल्पट्टदेयो अवनु. याव वस्तुविनन्नू हिंसेबडसदंथ अवधूतचर्यवन्नु होंदि ( शुकमुनियन्नु ), पुत्र—दूरदल्लिद्दवनन्नु करेयबेकादरे आ शब्दद अंत्य स्वरक्के बरुव प्लुतवन्नु इल्लि छंदःसिगे सरियागबेकेंदु बिट्टिरुवरु, इल्लदिद्दरे आ प्रयोगवु ‘ पुत्र; इति ’ एंदु आगुत्तित्तु; अथवा एल्ल कडेयल्लियू व्याप्तनागिद्दानेंदु तोरिसुवदक्कागियादरू बिट्टिरुवरु.

तन्मयतया-अहंकारात्मक रुद्रावताराशुकस्य व्याप्तिमत्तया वृक्षा अपि प्रतिशब्दं नेदुः, किमुत शरीरिण इति द्योतयितुं ‘ अपि ’ शब्दः । सर्वभूतानां हृत्स्थानमयते-गच्छतीति सर्वभूतहृदयः, तं-अहंकारतत्त्वाभिमानित्वेन सर्वत्र स्थितमित्यर्थः ॥ २ ॥

अहंकारतत्त्वक्के अभिमानियाद रुद्रन अवतारनाद श्रीशुकमुनियु एल्लकडेयल्लियू व्याप्तनागिरुवदरिंद गिडगळु सह प्रतिध्वनि माडिदवु. अंदमेले शरीरवुळ्ळ चेतनगळु माडुवदेनाश्चर्यवेंदु तोरिसुवदक्कागि ‘ अपि ’ एंब पदवन्नु उपयोगिसिरुवरु. सर्व प्राणिगळ हृदयस्थानदल्लिरुववनु ( ‘ हृत्–मनोविशेषरूपं अहंकारं प्रेरकतया अयतीति हृदयं ’ यादुपत्ये ) अंदरे अहंकारतत्त्वाभिमानियाद्दरिंद एल्लकडेयल्लियू व्याप्तनादवनु ॥ २ ॥

यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोंधं ॥
संसारिणां करुणयाह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनां ॥ ३ ॥

पुनरपि भक्त्युद्रेकात्तमेव प्रणमति, य इति । यः स्वानुभावं-अनन्याधीनसामर्थ्यं ब्रह्म ममाह-उपादिशत् । यश्चांधंतमः-अंधत्वापादकमज्ञानं तितीर्षतां-तर्तुमिच्छतां संसारिणां-जीवानां करुणया अखिलानां श्रुतीनां अर्थज्ञापकतया सारमुत्तमं। अखिलस्य जगतः श्रुतेः-श्रवणेंद्रियस्य सारं-सुखदं वा । एकं-सकलपुराणोत्तमं, देहादीश्वरपर्यंततत्त्वानि दीपयति-प्रकाशयतीत्यध्यात्मदीपं, पुराणगुह्यं-पुराणेषु गोप्यं, पुराणस्य भगवतः सन्निधातुं योग्यमिति वा । भागवताख्यं पुराणं मम व्याचख्यौ, मुनीनां गुरुं तं व्याससूनुं श्रीशुकं उपयामि-शरणं गच्छामीत्येकान्वयः ॥

आ शुकाचार्यरल्लि अतिशयवाद भक्तियु इरुवदरिंद सूतनु पुनः ई श्लोकदिंदादरू आ श्रीशुकाचार्यरन्ने नमस्करिसुत्ताने—यावनु एरडनेयवन अधीनवागदेइद्द सामर्थ्यवुळ्ळ ब्रह्मनन्नु ( परमात्मनन्नु ) ननगे उपदेश माडिदनो, यावदू तिळियगोडदंते माडुव अज्ञानवन्नु संपूर्णवागि दाटलिच्छिसुव संसारदल्लिद्द ( अधिकारी ) जनरमेले अंतःकरणदिंद एल्ल श्रुतिगळ अर्थवन्नु तिळिसुवदरिंद मुख्यवाद ( सारभूतवाद ) अथवा सकल जनर किविगे आनंदवन्नु कोडुव, एल्ल पुराणगळल्लि उत्तम वाद, देह मोदलु माडि परमात्मन वरेगू एल्ल तत्त्वगळन्नु प्रकाश माडुव, एल्ल पुराणगळल्लि गुप्तमाडि इडलिक्के योग्यवाद अथवा परमात्मन संनिधानक्के योग्यवाद श्रीमद्भागवतवेंब पुराणवन्नु, ननगे विस्तारमाडि हेळिदनो अंथ ज्ञानिगळिगे गुरुवाद, श्रीवेदव्यासर पुत्रनाद आ श्रीशुकमुनिगे शरणागतनागुत्तेने.

अखिलश्रुतीः सरति-गच्छति विषयतयेत्यखिलश्रुतिसारः । कर्मण्यण् प्रत्ययः । वेदार्थेषु सारभूतमिति वा ॥

एल्ल श्रुतिगळल्लियू विषयवागिद्दद्दु अथवा सर्व श्रुतिप्रसिद्धवादद्दु अथवा वेदार्थगळल्लि सारभूतवादद्दु अंदरे मुख्यवादद्दु.

अध्यात्मं-देहः, तत्र दीपवद्वर्तमानं पुराणेषु गोपितं स्वानुभावं ममोपदिदेशेति वा ॥ ३ ॥

देहदल्लि दीपदंते प्रकाशिसुव, पुराणगळल्लि गुप्तमाडिट्ट, तन्न अनुभवक्के बंद परब्रह्मनन्नु ननगे उपदेश माडिदनु ॥ ३ ॥

---

१ अतितितीर्षतां—अतिशयेन तर्तुमिच्छतां । ( यादुपत्य )

**नारायणं नमस्कृत्य नरं चैव नरोत्तमं ॥ देवीं सरस्वतीं व्यासं ततो ग्रंथमुदीरये ॥ ४ ॥**

इष्टदेवतां शास्त्रगुर्वादीन् प्रणमति, नारायणमिति । नारायणं-शास्त्रप्रतिपाद्यं, तथा तमेव शास्त्रकर्तृत्वाद्गुरुं व्यासंवा नमस्कृत्य सकलभाग्यात्मिकां श्रियं देवीं तथा परमगुरुं नरोत्तमं-वायुं तथा विद्याभिमानिनीं सरस्वतीं तथोपसाधकं नरं-शेषं प्रणम्य ततस्तेषां प्रसादात् श्रीभागवताख्यं ग्रंथमुदीरये-व्याख्यास्ये । भगवत्प्रश्नपरिहारित्वेनेति शेष इत्येकान्वयः ॥ श्रीभागवतादिसर्वशास्त्रप्रवक्तृ-श्रोतृभिस्तेऽवश्यं नमस्कार्या इति द्योतयितुमेवेत्युक्तिः ॥ ४ ॥

इष्ट देवतेयन्नू हागू शास्त्रकर्तृगळाद वेदव्यासरे मोदलादवरन्नू नमस्करिसुत्तारे—ई शास्त्रदल्लि प्रतिपाद्यनाद नारायणनन्नु, हागु अवन अवताररादं ई शास्त्रकर्तृगळाद वेदव्यासरन्नू, सकलभाग्यस्वरूपळाद रमादेवियन्नू परमगुरुगळाद जीवरल्लि श्रेष्ठराद वायुदेवरन्नू, विद्यगे अभिमानियाद सरस्वतियन्नू आ विद्यगे सहायकनाद शेषनन्नू नमस्करिसि, अवर अनुग्रहदिंद ई भागवतवेंब ग्रंथवन्नु निम्म प्रश्नगळिगे उत्तररूपवागि हेळुत्तेने. श्रीमद्भागवत मोदलाद सर्वशास्त्रगळन्नु हेळुववरू केळुववरू ई देवतेगळन्नु नमस्करिसतक्कद्देंदु तोरिसुवदक्कागिये " एव " एंदु अंदिरुवरु ॥ ४ ॥

**मुनयः साधु पृष्टोहं भवद्भिर्लोकमंगलं ॥ यत्कृतः कृष्णसंप्रश्नो येनात्माशु प्रसीदति ॥ ५ ॥**

संप्रति सूतः शौनकादिप्रश्नसंतुष्टस्तत्प्रश्नं स्तौतीत्याह, मुनय इति । कृष्णविषयः समीचीनः प्रश्नः कृत इति यद्यस्मात् अतोहं भवद्भिः साधु-सर्वसाधनेषूत्तमसाधनंप्राति पृष्टः, नकेवलमुभयेषामस्माकं साधु, किंतु लोकं मंगलयतीति श्रवण-मननाभ्यां कल्याणजनकत्वादित्यर्थः । कुतः येन कृष्णसंप्रश्नेनात्मा-परमात्मा मनो वा प्रसीदति तस्मादित्येकान्वयः ॥ ५ ॥

इन्नु सूतनु शौनकादि ब्राह्मणर प्रश्नगळिंद संतुष्टनागि अवुगळन्नु श्लाघनमाडुत्तानेंदु हेळुवरु—मुनिगळिरा, नीवु कृष्णविषयवाद उत्कृष्ट प्रश्नवन्नु माडिद्दरिंद एल्ल साधनगळल्लि उत्तमवाद साधनवन्नु केळिदंतायितु. ई प्रश्नवु नम्मगळिगष्टे मंगळकरवादद्दंतल्ल, आदरे आ विषयवन्नु श्रवण माडुवदरिंद अदु कल्याणवन्नु माडुवदाद्दरिंद एल्ल लोककू मंगळकरवादद्दु. यॉकेंदरे ई कृष्णन विषयकवाद प्रश्नदिंद परमात्मनु प्रसन्ननागुवनु अथवा नम्म मनःसु प्रसन्नवागुवदु ॥ ५ ॥

**स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ॥ अहैतुक्यव्यवहिता ययात्माशु प्रसीदति ॥ ६ ॥**

भगवद्भक्तिजनकत्वात् कृष्णसंप्रश्नएव परमधर्म इत्याह, स वा इति । यतः-कृष्णसंप्रश्नात् अधोक्षजे अहैतुकी अव्यवहिता भाक्तिर्भवति पुंसां

परमधर्मः स वा इत्येकान्वयः । अक्षजन्यज्ञानमधःकृत्वाऽतीत्य वर्तत इत्यधोक्षजः । भगवत्प्रसादमंतरेण काम्यफलहेतुशून्याऽहैतुकी । विक्षेपादन्यप्रसंगादिव्यवधानशून्याऽव्यवहिता। नचान्योसावन्योहमस्मीति 'ना विष्णुः कीर्तयेद्विष्णुं' इत्यादिश्रुति-स्मृतिनिषिद्धत्वात् भेदबुध्यपरपर्यायव्यवधानशून्येत्यर्थ इति । 'व्यवधानं तिरोधानमपिधानमथोच्यत' इत्यभिधानविरोधात् नच श्रुतिविरोधः, अस्या अन्यार्थत्वात् । अविष्णुः नविष्णुर्यस्य स तथा तद्भक्त इत्यर्थः । अन्यः-स्वतंत्रः । अप्रतिहतेति पाठे अस्खलितेत्यर्थः । यया भक्त्या आत्मा आशु प्रसीदाति समुच्च त्यमनीषयेत्युक्तं दर्शयति, स इति । सएव परो धर्मः, यतो धर्मादधोक्षजे भक्तिर्भवतीति वा ॥ ६ ॥

परमात्मनल्लि भक्तियन्नु हुट्टिसुवदाद्दरिंद श्रीकृष्णन विषयवाद प्रश्नवे परम धर्मवेंदु हेळुवरुः—कृष्णन विषयकवाद याव प्रश्नदिंद अधोक्षजनल्लि जनगळिगे निर्निमित्तकवाद अविच्छिन्न भक्तियु हुट्टुत्तदेयो अदे परमधर्मवु. आ भक्तियिंद परमात्मनु शीघ्रवागि प्रसन्ननागुवनु अथवा नम्म मनःसु प्रसन्नवागुवदु. इंद्रियगळिंद हुट्टिद ज्ञानवन्नु मीरिदवने अधोक्षजनु. परमात्मन प्रीतिय होर्तु एरडने याव काम्यफलवु इल्लदे इद्द भक्तिये अहैतुकीभक्तियु. मनोविकल्पदिंद एरडने प्रसंग मोदलाद प्रतिबंधरहितवाद भक्तिये अव्यवहितभक्तियु. 'उपास्यनाद देवरु नन्निंद भिन्ननु, नानु उपास्यनाद देवरिंद भिन्ननु' एंब भेदबुद्धियु "विष्णुनागदवनु विष्णुविनन्नु स्तोत्रमाडलारनु" ई मोदलाद श्रुति-स्मृतिगळिगे विरुद्धवागुवदरिंद 'भेदबुद्धि' एंब एरडने हेसरुळ्ळ 'व्यवधानरहितवाद' ( **अव्यवहिता**—भेदविल्लद ( एंदु परकीयरु 'अव्यवहित' पदक्के अर्थमाडुवरु; आदरे कोशदल्लि 'व्यवहित' पदक्के अवरु माडुव अर्थविरदेइद्ददरिंद आ अर्थवु सरियादद्दल्ल. मत्तु मेले हेळिद श्रुतिगळिगे एरडने अर्थवे ( **अविष्णु**—यावनिगे विष्णुवु देवतियागिल्लवो अवनु आविष्णुनु; **नाविष्णुःकीर्तयेद्विष्णुं**—विष्णु भक्तनागदवनु विष्णुविनन्नु कीर्तने माडलारनु. 'अन्योसौ' एंब श्रुतियल्लि अन्य एंदरे स्वतंत्रनु ) इरुवदरिंद नावु हेळिद अर्थवु श्रुति-स्मृतिगळिगे विरुद्धवागुवदिल्ल. 'अव्यवहित' एंबल्लि '**अप्रतिहत**' एंब पाठविद्दरे अदक्के 'अस्खालितवाद' एंदु अर्थवन्नु माडबेकु. बुद्धियिंद चन्नागि विचारमाडि हेळबेकेंदु हिंदे केळिद्दक्के ( मोदलने अध्यायदल्लि ६ प्रश्नगळन्नु माडिद्दरोळगे १ने प्रश्नक्के उत्तरवु, 'इदे धर्मवु' एंदु हेळुत्तारे. 'याव धर्मदिंद परमात्मनल्लि भक्तियु हुट्टुत्तदेयो अदे परमधर्मवु' एंदादरू अर्थवु. ॥६॥

१ 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योहमस्मीति न स वेद यथा पशुः' इति ब्रहदारण्यकवाक्यं ॥ तस्येयं परकीयव्याख्या—यः कश्चित् अब्रह्मवित् स्वात्मनो व्यतिरिक्तां देवतां अन्योहमुपास्यदेवतायाः अन्योसौ मत्तः उपासनीयो देवः इत्येवं भेददृष्टचोपास्ते स उपासकः उपास्योपासकयोः तत्त्वं नवेदेति ॥ तथाचात्र भेदज्ञाननिंदया तन्निषेधोऽभिमत इति भावः ॥ स्मृतौ विष्णुभिन्नस्य विष्णुकीर्तनकर्तृत्वनिषेधेन तत्कर्ता तदभिन्न इति सिध्यतीत्याशयः ॥ ६ ॥ ( तात्पर्य )

## वासुदेवे भगवति भक्तियोगः प्रयोजितः ॥ जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकं ॥ ७ ॥

भक्तिरपि वैराग्यद्वारेण अपरोक्षज्ञानसाधनमित्याह, वासुदेव इति । वासुदेवे भगवति प्रयोजितो भक्तियोगः वैराग्यं यदहैतुकं ज्ञानं तच्च जनयतीत्येकान्वयः । वसति सर्वत्र, स्वस्मिन् सर्वं वासयतीति वा वासुः, क्रीडादिकरणाद्देवः, वासुश्चासौ देवश्चेति वासुदेवः, तस्मिन् भक्तिलक्षण-उपायः-भक्तियोगः, वैराग्यं-विषयेष्वसारताबुद्धिं, अकारवाच्यविष्णुप्रसादएव हेतुर्निमित्तं यस्य तत्तथोक्तं । द्रव्यलाभादिहेतुसंबंधींद्रजालादिज्ञानं नभवतीति वा ॥ ७ ॥

भक्तियादरू वैराग्यद्वारदिंदले अपरोक्षज्ञानके साधनवेंदु हेळुवरु–परमात्मनल्लि माडिद भक्तियु तीव्रवे वैराग्यवन्नू, निर्निमित्तकवाद ज्ञानवन्नू हुट्टिसुत्तदे–

वासुदेव–एल्ल कडेयल्लियू वासिसुवनु अथवा तन्नल्लि एल्लरन्नू वासमाडिसुववनु, आद्दरिंद ‘वासु’ एंतलू, क्रीडादिगळन्नु माडुवदरिंद ‘देव’ नेंतलू करेयल्पडुवदरिंद अवनिगे ( परमात्मनिगे ) वासुदेवनेन्नुवरु. वैराग्य–विषयगळल्लि एनू अर्थविल्लवेंब बुद्धियु. अहैतुकं–‘अ’ कारदिंद हेळुव विष्णुविन प्रसादवे निमित्तवाद ज्ञानवु, इंद्रजाल मोदलाद ज्ञानवु अल्ल ॥ ७ ॥

## धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथाश्रयां ॥ नोत्पादयेद्यदि रतिं श्रम एव हि केवलं ॥ ८ ॥

ननु नैमित्तिकादिधर्माणां सत्त्वात्कथमस्यैव परमत्वमित्याशंक्य तेषामपि कृष्णकथारतिजनकतया तत्साधनत्वेन परमत्वमित्याह, धर्म इति । यः पुरुषैःस्वनुष्ठितो धर्मः विष्वक्सेनकथाश्रयां रतिं नोत्पादयेत्तर्हि पुंसां स केवलं श्रमएवहीत्येकान्वयः । शास्त्रोक्तसदाचारद्रव्य-देश-कालादिभिर्नियततया सुष्ठ्वनुष्ठितः स्वधर्मः यत्राग्नि कीर्तिते विष्वक्-सर्वतः अंचयाति दैत्यसेनामिति विष्वक्सेनः, तस्य कथासु रतिं निरंतराभ्यासरूपां । केवलं श्रमएव-क्रियाकाले उत्तरकालेपि दुःखस्वरूपत्वादायासएवेत्यर्थः । हि शब्देनानेवंवित् महत्पुण्यं कर्म करोति तद्धास्यां ततः क्षीयत इति श्रुतिप्रसिद्धिं दर्शयति ॥ ८ ॥

इल्लि नित्य ( ब्राह्मणनु दिनालू अवश्यकवागि माडुव संध्या मोदलाद कर्मगळु ) नैमित्तिक ( यावदादरोंदु निमित्तदिंद माडुव श्राद्ध मोदलाद कर्मगळु ) मोदलाद धर्मगळु इरलु ई भक्तियोगवे याके परमधर्मवु एंदु आक्षेपमाडिदरे अवादरू श्रीकृष्णन कथेगळल्लि आसक्तियन्नु हुट्टिसुवदरिंद आ भक्तियोगके साधनवागि परमधर्मवे एनिसुववेंदु हेळुवरुः–जनरिंद चन्नागि आचरिसल्पट्ट धर्मवु विष्णुविन कथेगळल्लि आसक्तियन्नु हुट्टिसदिद्दरे आ माडिद धर्मवु केवल श्रमवे. शास्त्रदल्लि

होळिद सदाचार, द्रव्य, देश, काल मोदलादवुगळिंद ( निर्बंधमाडल्पट्टिद्दरिंद ) युक्तवाददरिंद चन्नागि आचरिसल्पट्ट धर्मवे स्वधर्मवु. यावन नामोच्चारणमाडुवदरिंद यावनु दैत्यर सैन्यवन्नु विष्वक्–एल्ल कडेयल्लियू अंचयति–गमनमाडिसुवनो अवनु विष्वक्सेननेंदु करेयल्पडुवनु. अवन कथेगळल्लि रतिं–यावागलू माडि माडि अभ्यासरूपवाद आसक्तियन्नु, केवलं श्रमएव–माडुव कालकू परिणामदल्लियू दुःखरूपवाददरिंद केवल आयासवे. 'हि' शब्दवु 'ई रीतियिंद तिळियदेइद्दवनु महत्पुण्यवन्नु माडिदाग्यू कोनेगे आ पुण्यवु क्षीणवागि होगुवदु' एंब श्रुतियल्लि प्रसिद्धवाद अर्थवन्नु तोरिसुत्तदे ॥ ८ ॥

## धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायेह कल्पते ॥ नार्थस्य धर्मैकांतस्य कामो लाभाय हि स्मृतः ॥ ९ ॥

ननु धर्मस्य भगवत्कथारत्यजनकत्वे कथं श्रमैकफलत्वं? धर्मादर्थ अर्थात्कामः कामात्सुखं इत्यर्थशास्त्रादौ प्रसिद्धिरिति तत्राह, धर्मस्येति। अपवर्गो-मोक्षः, तत्साधनमापवर्ग्यं, तस्य धर्मस्य इहार्थः-कांचनादिद्रव्यं अर्थाय-फलाय नकल्पते हि यस्मात्तस्माद्धरिकथारतिजनकत्वमेव फलमित्यर्थः। धर्मएव एकांतं-नियमेन फलं यस्य स धर्मैकांतः। तस्य धर्मसाधनस्यार्थस्य कामो लाभाय-प्रयोजनाय नस्मृतः। विद्वद्भिरिति शेषः। अत्रापि 'हि' शब्दो हेतौ ॥ ९ ॥

"धर्मदिंद द्रव्यप्राप्तियागुवदु, द्रव्यदिंद अपेक्षेगळु सिद्धवागुववु मत्तु अदरिंद सुखवु दोरेयुवदु" एंदु अर्थशास्त्र मोदलाद शास्त्रगळल्लि प्रसिद्धवाददरिंद धर्माचरणेयिंद भगवत्कथेगळल्लि आसक्तियु हुट्टदिद्दरे अदु आयासवे फलउळ्ळद्दु हेगे आगुवदेंदरे हेळुवरु–मोक्षक्के साधनवाद धर्मक्के भंगार मोदलाद अर्थवु फलवागुवदिल्ल. आद्दरिंद आ धर्मक्के हरिकथेयल्लि आसक्तियन्नु हुट्टिसुवदे फलवु. धर्मवे निश्चयवागि फलवुळ्ळ अर्थक्के, अंदरे धर्मक्के साधनवाद द्रव्यक्के कामवु फलवल्लेंदु (अर्थक्के अपेक्षेगळु पूर्णवागुवदु फलवल्ल आदरे धर्मवे फलवेंब अभिप्रायवु) बुद्धिवंतरिंद हेळल्पट्टिरुवदु. एरडू 'हि' पदगळु हेतुवन्नु तोरिसुववु ॥ ९ ॥

## कामस्य नेंद्रियप्रीतिर्लाभो जीवेत यावता ॥ जीवस्यातत्त्वजिज्ञासोर्नार्थो यश्चेहकर्मभिः ॥ १० ॥

कामस्येंद्रियप्रीतिर्लाभो नभवति तर्ह्यशनाच्छादनाद्यभावे क्षुधादिना मरणमेव स्यात्तत्राह, जीवेतेति। यावतार्थादिना जीवति-शरीरयात्रानिर्वाहको भवति तस्मादर्थशास्त्रादौ प्रतिपादितक्रमो बहिर्मुखानामिति भावः। ब्रह्मार्पणबुत्थ्या कृतस्य कर्मणो भगवत्कथारतिसाधनत्वमित्याह जीवस्येति। इह कर्मभिर्योर्थः-भगवत्कथारतिलक्षणः सः अतत्त्वजिज्ञासोर्जीवस्य नभवति-भगवत्तत्त्वमजानतः पुरुषस्य तदनर्पणबुत्थ्या कृतैः कर्मभिः फलमैहिकामुष्मिकं नस्यादिति भावः ॥ १० ॥

कामके इंद्रियप्रीतियु फलवल्ल अंदरे अपेक्षेगळु पूर्णवागुवदरिंद सुखवागुत्तदेंब मातु सरियल्ल; हागादरे अशन, प्रावरण ( उंबोण, होद्दुकोंबोण ) मोदलादवुगळु इरदिद्दरे हसिवे मोदलादवुगळिंद मरणवु ओदगुवदेंदरे–शरीरद व्यापारवु नडेयुवदक्के एष्टु अवश्यकवो अष्टे सेवन माडबेके होर्तु सुखवागबेकेंदु ( इंद्रियप्रीतिगागि ) सेवनमाडबारदेंब अभिप्रायवु. आद्दरिंद मेले हेळिद अर्थशास्त्र मोदलादवुगळल्लि धर्मदिंद अर्थप्राप्तिये मुंताद हेळिद क्रमवु धर्मदिंद बहिर्मुखरादवर मतेंब अभिप्रायवु. माडिद्देल्लवू श्रीहरिगे अर्पणवायितेंब बुद्धियिंद माडिद कर्मगळु श्रीहरिय कथेयल्लि आसक्तियन्नु हुट्टिसलिके कारणवेंदु ई श्लोकद एरडने अर्धभागदल्लि हेळवरु–ई लोकदल्लि कर्मगळन्नु माडुवदरिंद हरिकथेयल्लि आसक्तियु एंब याव फलवु बरुवदो अदु तत्त्ववन्नु अरियद जीवनिगे बरुवदिल्ल; अंदरे भगवत्तत्त्ववन्नु अरियद जीवनिगे श्रीहरिगे अर्पण माडदे माडिद कर्मगळु ई लोकदल्लियू, परलोकदल्लियू फलवन्नु कोडुवदिल्ल ॥ १० ॥

## वदंति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयं ॥ ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥

ननु अतत्त्वजिज्ञासोरित्युक्तं किं तत्तत्त्वं, येन तदज्ञस्य कर्मभिः पुरुषार्थो नस्यादिति तत्राह वदंतीति । यत् अद्वयं-असमाधिकं, ज्ञानं-ज्ञानस्वरूपं देश-कालादिषु बृंहितत्वात्सर्वांतर्यामित्वादैश्वर्यादिगुणवत्त्वात् ब्रह्मेति, परमात्मेति, भगवानिति शब्द्यते ॥ ११ ॥

मेले "अतत्त्वजिज्ञासोः" तत्त्ववन्नु तिळकोळ्ळदवनिगे पुरुषार्थलाभवु आगुवदिल्लेंदु हेळिदिरि, आदरे आ तत्त्ववु यावदेंदु केळिदरे अदके उत्तरवन्नु हेळुवरु- यावदके समानवादद्दू अधिकवादद्दू इल्लवो, यावदु ज्ञानस्वरूपवादद्दो, देशदल्लियू कालदल्लियू तुंबिद्दरिंदल्ल ( देशदल्लि तुंबिद्देंदु अन्नुवदरिंद एल्ल कडेयल्लियू व्याप्तवादद्देंदु अर्थ तोरिदाग्यू एल्ल वस्तुगळल्लियू नियामकनागिरुवनेंदु तोरिसुवदक्कागि यल्लवस्तुगळल्लिरुवनेंदु हेळिरुवरु. ) ऐश्वर्यमोदलाद गुणगळिंद युक्तवादद्दरिंदल्ल ब्रह्म एंदु, परमात्मनेंदू भगवानेंतल्ल करेयल्पडुत्तदेयो अदे तत्त्वेंदु तत्त्ववन्न बल्लवरु हेळुवरु ॥ ११ ॥

## सत्तामात्रं तु यत्किंचित्सदसच्चाविशेषणं ॥ उभाभ्यां भाष्यते साक्षाद्भगवान् केवलः स्मृतः ॥ १२ ॥

यच्च सत्तामात्रं-केवलानंददेहं अतएव यत्किंचिल्लोकविलक्षणं तत्तत्त्वं वदंतीति त्रिकालेप्यनन्यथाभूतमेकविधं ब्रुवते । नब्रह्मणो ज्ञानस्वरूपत्वं युक्तिमत् । लोके ज्ञानस्य विषयापेक्षयोत्पत्ति-विनाशधर्मदर्शनादस्यापि तथात्वेनानित्यप्रसंगादिति तत्राह सदसादिति । सत्कार्यं असत्कारणं च अविशेषणं स्वनियतविशेषापादकं । यस्येति शेषः । विषयापेक्षया अनुत्पाद्यमिति । उभाभ्यां-सदसभ्द्यां, भाष्यते-मृत्स्रष्टृ-मृज्ज्ञातृ-घटज्ञात्रित्याद्यनंतकार्य-कारणविशिष्टतया व्यवन्हियते । अतो भगवान् साक्षात्केवलः-प्रकृतिसंबंधविधुरः स्मृतः ॥

यावदु केवल आनंददेहवुळ्ळद्दो आद्दरिंदले लोकविलक्षणवादद्दो अदके तत्ववेत्तुवरु; आद्दरिंद याव कालदल्लियादरू ओंदेप्रकारवादद्देंदु अन्नुवरु. ब्रह्मनु ज्ञानस्वरूपनेन्नुवदु सयुक्तिकवल्ल; याकंदरे लोकदाल्लि ज्ञानवु विषयगळ संबंधदिंद उत्पत्ति-विनाशवुळ्ळद्दाद्दरिंद मत्तु ब्रह्मनादरू ज्ञानस्वरूपनेन्नवदरिंद अनित्यनागुव प्रसंगवु बरुवदेंदरे हेळुवरु–'सत्-कार्यवु; असत्-कारणवु; इवु एरडू ज्ञानस्वरूपनाद ब्रह्मनिगे लौकिक ज्ञानदंते उत्पत्ति-विनाशरूप विशेषवन्नु तंदु', कोडुवदिल्ल. विषयदिंद ज्ञानस्वरूप ब्रह्मवु हुट्टिदिद्दरू 'मृत्तिका' एंब कारणवन्नु सृष्टिमाडुववनु मत्तु 'घट' वेंब कार्यवन्नू सृष्टिमाडुववनु मत्तु अवुगळन्नु तिळियुववनेंदु अनेक व्यवहार गोचरनागुववनु. आद्दरिंद परमात्मनु केवलनु अंदरे प्रकृतिसंबंधविल्लदवनेंदु एनिसुवनु.

**यद्विषयज्ञानं भक्तियोगं जनयेत् तत् ब्रह्म किं प्रमाणे गोचरः उत अगोचरः? गोचरश्चेद्घटादिवदब्रह्मत्वं, अगोचरश्चेन्नास्त्येवेत्याशंक्योभयदोषपरिहारायाह वदंतीति । न वयं प्रमाणैरनुमीमहे, नचैव तावता नास्ति, किंतर्हि विज्ञानमद्वयं-ज्ञातृ-ज्ञेयलक्षणरहितं तत्त्वविदस्तत्तत्त्वं जगदाकारेण विवर्तत इति वदंति तदेव वेदांतिभिर्ब्रह्मेति, परमात्मेति, भगवानिति शब्द्यते । तत्रायं विभागः । बृहत्त्वात् ब्रह्मेति वेदांतिनः, परं केवलमादानादिकर्तृत्वादात्मेति योगिनः, षड्गुणयुक्तत्वाद्भगवानिति पौराणिकाः । तत्र किं तत्सत्यमिति तत्राह, सत्तेति । तस्मादत्र सगुणं प्रमाणवेद्यं ननिर्गुणमिति शास्त्रमथितार्थ इति केचिद्व्याचक्षते तदसारं, अत्रैव पूर्वापरवाक्यार्थपर्यालोचनया स्वविरोधात् ॥ १२ ॥**

इन्नु यावन विषयवाद ज्ञानवु भक्तियन्नु हुट्टिसुवदो आ ब्रह्मनु प्रमाणदिंद गोचरनो अथवा अगोचरनो (प्रमाणदिंद तिळियुवनो इल्लवो?) गोचरनेंदरे घटदंते ब्रह्मनेनिसुवदिल्ल, मत्तु अगोचरनेंदरे ब्रह्मनेंब वस्तुवे इल्लेंदु शंकिसिदरे ई एरडू दोषगळन्नु परिहार माडुवदकागि हेळुवरु–नावु प्रमाणगळिंद ब्रह्मनन्नु ऊहिसुवदिल्ल मत्तु इष्टरिंदले अवनु इल्लतल्ल अन्नुवदिल्ल; हागादरे एनेंदरे यावदु ज्ञानस्वरूपवादद्दु, भेदशून्यवादद्दु, एरडनेदन्नु तानू तिळियुवदिल्ल मत्तु एरडनेद्दरिंद तिळियलशक्यवादद्दो अदे तत्त्ववु जगदाकारदिंद तोरुवदु एंदु तत्त्वज्ञानिगळु हेळुवरु, अदे तत्त्ववे वेदांतिगळिंद ब्रह्म, परमात्मा, भगवान् एंब शब्दगळिंद करेयल्पडुवदु अदरल्लि ई विवेकवु–दोड्डदाद्दरिंद ब्रह्म एंदु वेदांतिगळु, कोडुवदु तेगेदुकोंबुवदु मुंताद केलस माडोणदरिंद 'आत्मा' एंदु योगिगळु, षड्गुणैश्वर्यसंपन्ननाद्दरिंद भगवानेंदु पौराणिकरु आ वस्तुवन्नु करेयुवरु, अवुगळल्लि यावदु सत्यवादद्देंदरे ई १२ ने श्लोकदिंद हेळुवरु, आद्दरिंद सगुण ब्रह्मवे प्रमाणदिंद तिळियतक्कद्दु, निर्गुण ब्रह्मवु तिळियतक्कद्दल्लेंदु केलवरु (अद्वैतरु) हेळुवदु अर्थविल्लद मातु. याकेंदरे इल्लिये पूर्वापर वाक्यगळन्नु विचारमाडिदरे परस्पर विरोधवु कंडुबरुवदु ॥ १२ ॥

---

१ एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासः विवृतशब्दार्थः

**तच्छ्रद्दधाना मुनयो ज्ञान-वैराग्ययुक्तया ॥ पश्यंत्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ॥ १३ ॥**

तदाह, तदिति । एवमुक्तप्रकारेण ब्रह्म-परमात्माद्यनंतवैदिकादिपदवाच्यतया सगुणः सर्वजगत्कर्ता परमात्मैव यस्मात्तस्मान्मुनयो ज्ञानिनः श्रद्दधानाःशास्त्रोक्तवस्तुगत्यास्तिक्यबुद्धियुक्ताः, श्रुतिगृहीतया-वेदांतश्रवणेन दृढगृहीतया, तत्त्वज्ञानेन विषयवैराग्येण युक्तया भक्त्या तमेवात्मानं परमात्मानं आत्मनि-त्हृदि पश्यंति । 'च' कारः 'स्वात्मन्येवात्मानं पश्येत्' इति श्रुतिप्रसिद्धिद्योतको, नत्वात्मनि क्षेत्रज्ञे जीवे आत्मानं-परमात्मानं पश्यंति, परमात्मनि क्षेत्रज्ञंचेति समुच्चयार्थः । तस्माज्जगदाकारेण विवर्तितं तत्त्वमन्यन्निर्गुणमन्यत्तत्त्वामिति नार्थः ॥ १३ ॥

मेले हेळिदंप्रकार 'ब्रह्म, परमात्मा' मोदलाद (अनेक) अंतविल्लद, वेददल्लि हेळिद, शब्दगळिंद मुख्यवागि ब्रह्मनु हेळल्पडुवदरिंद, गुणगळिंद पूर्णनू, सर्वज्ञनू, सर्वजगत्कर्तृनू आद परमात्मने आ तत्त्ववादरिंद शास्त्रदल्लि हेळल्पट्ट वस्तुविन (परमात्मन) ज्ञानदिंद हुट्टिद आस्तिक्यबुधियुळ्ळ ज्ञानिगळु वेदांतश्रवणदिंद दृढवाद तत्त्वज्ञानदिंदलू /विषयगळल्लि हुट्टिद वैराग्यबुधियिंद युक्तवाद भक्तियिंदलू आ परमात्मनन्न तम्म त्हृदयदल्लि नोडुत्तारे.

ई श्लोकदल्लि उपयोगिसिद 'च' शब्दवु तन्न त्हृदयदल्लिये परमात्मनन्नु नोडबनु एंब श्रुतिय प्रसिद्धियन्नु तोरिसुवदे होर्तागि जीवनल्लि परमात्मनन्नू परमात्मनल्लि जीवनन्नू नोडुत्तारे एंब समुच्चयार्थवन्नु तोरिसुवदिल्ल. आदकारण जगत्तिन आकारदिंद तोरुवदे तत्त्ववु, एरडनेदु निर्गुणवाददु अतत्त्ववु, एंदु परकीयरु माडुव अर्थवु सरियादद्दल्ल ॥ १३ ॥

**अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ॥ स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणं ॥ १४ ॥**

उपसंहराति अत इति । हेद्विजश्रेष्ठाः, संसिद्धिः-फलं ॥ १४ ॥

आद्दरिंद एलै ब्राह्मणोत्तमरे, वर्णाश्रमगळन्ननुसरिसि जनरिंद सरियागि माडल्पडुव धर्मके श्रीहरिय प्रीतिये फलवु ॥ १४ ॥

**तस्मादेकेन मनसा भगवान्सात्वतां पतिः ॥ श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १५ ॥**

कृष्णसंप्रश्नस्य परमधर्मत्वं निगमयाति तस्मादिति । यतः कृष्णसंप्रश्नस्यैव परमधर्मत्वं तस्माद्धेतोः एकेन-एकाग्रेण । 'च' कारौ परस्परसमुच्चयार्थे । श्रवणादितत्तत्काले कर्तव्यं, न क्वचित्कालो वृथा यापनीय इत्यस्मिन्नर्थे 'नित्यदा' शब्दः ॥ १५ ॥

कृष्णन विषयकवाद प्रश्नवे परम धर्मवेंदु निश्चितार्थवन्नु हेळुवरु–कृष्णन संबंधियाद प्रश्नवे परमधर्मवादरिंद यादवरिगे स्वामियाद परमात्मन चरित्रेयन्नु यावागलू एकाग्रचित्तदिंद श्रवणमाडतक्कद्दु, कीर्तन माडतक्कद्दु, ध्यानव माडतक्कद्दु मत्तु पूजिसतक्कद्दु.

ई श्लोकदल्लिय एरडू ' च ' ऎंब पदगळु समुच्चयवन्नु तोरिसुत्तवे अंदरे श्रवणवन्नू, कीर्तनवन्नू, ध्यानवन्नू हागू पूजेयन्नू माडबेकेंदु तोरिसुववु. आया कालक्के श्रवण-कीर्तन मोदलादवुगळन्नु माडुत्त स्वल्प कालवन्नादरू व्यर्थवागि कळेयबारदेंब अर्थदिंद ( नित्यदा ) यावगलू ई शब्दवन्नु उपयोगिसिरुवरु ॥ १५ ॥

## यदनुध्यायिनो युक्ताः कर्मग्रंथिनिबंधनं ॥ छिंदंति कोविदास्तस्य को न कुर्यात्कथारतिं ॥ १६ ॥

फलदर्शनं पुरोधाय प्रवृत्तिदर्शनाच्छ्रवणादिना किंफलमिति तत्राह, यदिति । यं भगवंतमनुसवनं-निरंतरं ध्यातुं शीलमेषामिति, यदनुध्यायिनः, युक्ता-मनोयोगयुक्ताः, कर्मपाशेन नितरां बंधनं तत् छिंदंति, तस्य कथासु रतिं को नकुर्यात् । अतः श्रवणादिफलमपरोक्षज्ञानद्वारा मुक्तिरेव ॥ १६ ॥

फलवन्नु मुंदे नोडुवदरिंद प्रवृत्तियु आगुत्तदेंदु कंडुबरुवदरिंद श्रवण-कीर्तन मोदलादवुगळिंद आगुव फलवन्नु हेळुवरु–यावन ध्यानवन्नु निरंतरदल्लियू माडुव अभ्यासवुळ्ळ एकाग्रचित्तराद ज्ञानिगळु कर्मपाशगळ बंधवन्नु इल्लदंते माडिकोळ्ळुवरो अवन कथेयल्लि आसक्तियु यारिगे हुट्टलिक्किल्ल. आद्दरिंद अपरोक्षज्ञानदिंद मुक्तियागुवदे श्रवण-कीर्तन मोदलादवुगळ फलवु ॥ १६ ॥

## शुश्रूषोः श्रद्धधानस्य वासुदेवकथारतिः ॥ स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १७ ॥

हरिकथारतिः केन स्यादिति तत्राह, शुश्रूषोरिति । हेविप्राः, शुश्रूषोर्गुर्वादिपरिचर्याशीलस्य वेदादिषु श्रद्धधानस्य महतां सेवया पुण्यतीर्थानां, भागवतादिसच्छास्त्राणां, गंगादितीर्थानां च नितरां सेवनाच्च वासुदेवकथारतिः स्यादित्येकान्वयः ॥ १७ ॥

हरिकथेयल्लि आसक्तियु यातरिंद हुट्टुवदेंबदन्नु हेळुत्तारे–एलै ब्राह्मणरे, गुरु-हिरियर सेवेयन्नु माडुव, वेद मोदलादवुगळल्लि विश्वासविद्द मनुष्यनिगे, दोड्डवर सेवेयन्नु माडुवदरिंदलू, भागवत मोदलाद सच्छास्त्रगळन्नू भागीरथि मोदलाद तीर्थगळन्नू अतिशयवागि सेविसुवदरिंदलू, परमात्मन कथेयल्लि आसक्तियु हुट्टुत्तदे ॥१७॥

## शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ॥ हृद्यंतस्थो ह्यभद्राणि विधुनोति सुहृत्सतां ॥ १८ ॥

श्रवणफलमाह, शृण्वतामिति । सुहृदनिमित्तबंधुः । पुण्ये श्रवणकीर्तने यस्य स तथा ॥ १८ ॥

सज्जनरिगे, निर्निमित्तकवागि बंधुवाद, तन्न श्रवण कीर्तन माडुववरिगे पुण्यवन्नु कोडुव एल्ल जनर हृदयदल्लि वासिसुव **श्रीकृष्णनु** तन्न कथेगळन्नु केळुव जनर अमंगळ पापगळन्नु दूर माडुत्ताने ॥ १८ ॥

**नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ॥ भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १९ ॥**

सर्वामंगलनाशफलमाह, नष्टेति । लिंगशरीरभंगपर्यंतमभद्राणां संभवात् प्रायेष्वित्युक्तं । नैष्ठिकी-अचला, उत्तम-उद्गतदोषः,श्लोका-कीर्तिर्यस्य स तथोक्तः तस्मिन् ॥ १९ ॥

एल्ल पापगळु नाशवागुवदरिंदागुव फलवन्नु हेळुत्तारे—नित्यदल्लियू भागवत सेवनमाडुवदरिंद ( श्रवण-पठणादिगळन्नु माडुवदरिंद ) एल्ल अमंगळगळू नष्टप्रायवागलु निर्दुष्टकीर्तियुळ्ळ परमात्मनल्लि अचलवाद भक्तियु हुट्टुत्तदे. लिंगशरीर भंगवागुव वरेगू अमंगळवु तप्पुवदिल्लेंदु तोरिसुवदक्कागि नष्टप्रायवेंददिरुवरु ॥ १९ ॥

**तदा रजस्तमोभावाः काम-लोभादयश्च ये ॥ चेत एतैरनाविद्धं स्थितं सत्वे प्रसीदति ॥ २० ॥**

भक्तिफलमाह, तदेति । यदा हरावचला भक्तिस्तदा ये रज आदयो भावाः एतैरनाविद्धं-असंसक्तं शुध्दसत्वे स्थितं वा बल-ज्ञानसमाहारवति हरौ स्थितं वा चेतः प्रसीदति-सकलदोषविधुरतया निरंतरं परमात्मानं स्मरतीत्यर्थः । रजस्तमोभ्यां भाव-उत्पत्तिर्येषां ते तथोक्ताः । काम-लोभादयः । ' च ' कारात्प्रमादादय इति वा ॥ २० ॥

मेले हेळिद भक्तिय फलवन्नु हेळुवरु—परमात्मनल्लि निश्चयवाद भक्तियु हुट्टिदमेले रजोगुण-तमोगुणगळिंद उत्पन्नवाद काम-लोभ मोदलादवुगळु, अथवा रजोगुण, तमोगुण मत्तु काम-लोभादिगळ संसर्गविल्लद, शुद्ध सत्वगुणवुळ्ळ अथवा ज्ञानसामर्थ्यगळ समूहनाद परमात्मनल्लिद्द चेतस्सु प्रसन्नवागुवदु. अंदरे सकल दोषगळु दूरागुवदरिंद यावागलू श्रीहरियन्ने स्मरणमाडुवदु. ई श्लोकदल्लि ' च ' शब्दवन्नु अनुक्त मत्तु उक्त समुच्चयार्थगळल्लि उपयोगिसिरुवरु. अनुक्त समुच्चयार्थदल्लि ' च ' कारदिंद प्रमादादिगळन्नु तिळकोळ्ळतक्कद्दु ॥ २० ॥

**एवं प्रसन्नमनसो भगवद्भक्तियोगतः ॥ भगवत्तत्त्वविज्ञानं मुक्तसंगस्य जायते ॥ २१ ॥**

निरंतरं हरिस्मरणफलमाह एवमिति । भगवत्तत्त्वविज्ञानं-स्वबिंबापरोक्षविज्ञानं ॥ २१ ॥

निरंतरवागि श्रीहरियं स्मरणेयन्नु माडुवदर फलवन्नु हेळुवरु–ई प्रकार प्रसन्नवाद मनःसुळ्ळ सकलसंगरहितनाद पुरुषनिगे परमात्मनल्लि भक्तियिंद तन्न बिंबरूपियाद परमात्मन अपरोक्षज्ञानवु ( प्रत्यक्षवु ) आगुत्तदे. इदे फलवु ॥ २१ ॥

## भिद्यते त्हृदयग्रंथिश्छिद्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि दृष्टएवात्मनीश्वरे ॥ २२ ॥

अपरोक्षज्ञानफलमाह, भिद्यत इति । आत्मनि-त्हृत्कमलकर्णिकामध्ये स्वाबिंबे सर्वेश्वरे दृष्टएव-तस्मिन्क्षणएव त्हृदयग्रंथ्याख्यलिंगं मनो भिद्यते-दग्धेन्धनायितोभवति, तस्मिन् भिन्नेसति ईश्वरादितत्त्वविषयाः सर्वसंशयाः छिद्यंते, तेषु छिन्नेषु सत्सु पूर्वकृतपापकर्माणि क्षीयंते, उत्तराणि नश्लिष्यंत इत्येकान्वयः । संसारच्छेदनमेवापरोक्षज्ञानफलमिति भावः ॥

अपरोक्षज्ञानद फलवन्नु हेळुवरु–त्हृदयकमलमध्यदल्लि बिंबरूपियाद परमात्मनु प्रत्यक्षनादाक्षणवे त्हृदयग्रंथियु ( जडमनःसु ग्रथितवाद लिंगदेहवु ) भिन्नवागुवदु. अंदरे इद्दाग्यू ( पूर्णवागि नाश होंदादिद्दाग्यू ) सुट्ट कड्डियंते तन्न केलसवन्नु माडदंतिरुवदु. ( याकंदरे आ लिंगशरीरवु भगवदपरोक्षवादाग्यू विरजास्नानवागुववरेगू संपूर्णवागि नाशवागुवदिल्ल ) मत्तु अदे क्षणवे पर मोदलाद सकल तत्त्वसंबंधियाद सर्व संशयगळु नाशहोंदुववु. संशयगळु दूरागुवदरिंद मोदलु माडिद एल्ल पापगळु नाशवागि मुंदे याव कर्मगळ लेपवू आगुवदिल्ल. आद्दरिंद ई संसारबंधनद छेदनवे अपरोक्षज्ञानद फलवेंब अभिप्रायवु.

आत्मनि-जीवे ईश्वरे-ब्रह्मणि दृष्टे, ब्रह्मणि जीवे दृष्टे चेति परस्परभेदनिरासेनाहमेव ब्रह्मेत्येवं दृष्टे व्यतिहारन्यायेन त्हृदयग्रंथिरहंकारः भिद्यत इति केचित्तदयुक्तं, श्रुति-स्मृतिविरोधात् । सत्य आत्मा, सत्यो जीवः, द्वासुपर्णाविद्यात्मनि भिदाबोधः भेददृष्ट्याभिमानेनेति भागवतज्ञानविधानादद्वैतज्ञाननिषेधाच्च ॥ २२ ॥

इन्नु ई श्लोकद अद्वैतव्याख्यानवन्नु बरेदु अदन्नु खंडनमाडुवरु. जीवनल्लि ईश्वरनु, ईश्वरनल्लि जीवनु काणिसुवदरिंद परस्पर भेदविल्लदंतागि ताने ब्रह्मनेंदु तिळियुवदरिंद व्यतिहारन्यायदिंद अंदरे परस्परवागि जीव-ब्रह्मरल्लि भेदविल्लेंदु तिळियुवदरिंद नानु एंब अभिमानवु इल्लदंतागुत्तदेंदु केलवरु ( अद्वैतरु ) अन्नुवदु, " परमात्मनु सत्यनु, जीवनू सत्यनु " " देहवेंब वृक्षदल्लि जीव मत्तु परमात्मनेंब एरडु पक्षिगळु इरुववु " " जीव-ब्रह्मरु भिन्नरेंदु तिळियुवदे विधेयु " ई श्रुति-स्मृति-

---

१ ' त्हृदयस्य–जडमनसः, ग्रंथिः–ग्रंथनं यस्मिन् स लिंगदेहः ' इति ( यादुपत्य ) ॥ २२ ॥

गळिगे विरुद्धवादुदरिंदलू ( वामनपुराणदलि ) " भेददृष्ट्याऽभिमानेन " ई मोदलाद वचनगळिंद भागवतज्ञान ( द्वैतज्ञान ) वु स्वीकरिसतक्कद्देंतलू अद्वैतज्ञानवु त्याज्यवादद्देंतलू हेळिद्दरिंद ( ई अद्वैतवादवु ) अयुक्तवादद्दु ॥ २२ ॥

**अतो वै कवयो नित्यं भक्तिं परमया मुदा ॥ वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीं ॥ २३ ॥**

निगमयति, अत इति । अतो-निःशेषदुःखनिवृत्त्यलंबुद्धिगोचरसुखानुभवलक्षणमोक्षाख्यपुरुषार्थलाभाद्धि कवयः परया मुदा आत्मप्रसादनीं भक्तिं वासुदेवे भगवति कुर्वन्तीत्येकान्वयः । आत्मप्रसादनीं-मनसो नैर्मल्यापादनीं विष्णुप्रसादजननीं वा । मुक्तामुक्ताश्चेत्युभयेपि हरौ भक्तिं कुर्वन्तीत्येतस्मिन्नर्थे ' वै ' शब्दः ॥ २३ ॥

फलितवन्नु हेळुवरु—आदुदरिंद सकल दुःखनिवारणवू अलंबुद्धियन्नु हुट्टिसतक्क सुखानुभववू ई लक्षणगळुळ्ळ मोक्षवेंब पुरुषार्थवु दोरेयुवदेंदु ज्ञानिगळु अत्युल्हासदिंद श्रीहरियल्लि तम्म मनःसन्नु निर्मलमाडुव अथवा तम्मल्लि विष्णुविन प्रसादवन्नु हुट्टिसतक्क भक्तियन्नु माडुत्तारे. मुक्तरू अमुक्तरूसह श्रीहरियल्लि भक्तियन्नु माडुत्तारेंब अर्थदिंद ' वै ' शब्दवन्नु उपयोगिसिरुवरु ॥ २३ ॥

**सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ॥**
**स्थित्यादये हरि-विरिंचि-हरेति संज्ञाः श्रेयांसि तत्र खलु सत्वतनौ नृणां स्युः ॥ २४ ॥**

उक्तश्रवणभक्त्यादिलभ्यमुक्तौ कोधिकारीत्याशंक्य सात्विकप्रकृतिरेव तत्राधिकारीति वक्तुं सत्त्वादिगुणांस्तदाश्रयांश्चाह, सत्वमिति । सत्वं रजस्तम इत्येते त्रयो गुणाः जडप्रकृतेः स्वरूपभूताश्चित्प्रकृत्याभिमताः हरेर्जगदुत्पत्तौ उपादानभूताः । तैर्गुणैः स्वयमगुणःसन्नपि तत्प्रवर्तकतया युक्तः परःपुरुषोऽस्य जगतः स्थित्यादये पालन-सृष्टि-संहारान्कर्तुं हरि-विरिंच-हरेति संज्ञा-नामानि एकएव धत्ते । विष्णुर्ब्रह्मा शिव इति संज्ञावत्त्वेनावतरति । तत्र सत्वगुणसंबंधविधुरोपि सत्वगुणप्रवर्तनेन जगत्पालयन् विष्णसंज्ञो हरिरनन्याधिष्ठिततया पृथगेव स्थितः चतुर्मुखस्थो ब्रह्माख्यो विष्णुः स्वयं अरजा अपि रजोगुणमुपादानीकृत्य जगत्सृजन्नास्ते । शिवाख्यो विष्णुः स्वयमतमा अपि तमोगुणप्रवर्तकतया जगत्संहरन् शिवे तिष्ठति । तत्सन्निधानविशेषादेव कमलासन-वृषासनयोर्ब्रह्म-शिवसंज्ञा । तस्माद्धरेरेव त्रिसंज्ञाः, न तु लोकप्रसिद्धहरि-ब्रह्म-शिवभेदानिरासेन

संज्ञाः । तथात्वे ' ब्रह्म-विष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपःसन् ' इत्यादिवामनपुराणविरोधात् । एवं त्रयोपि गुणा विष्ण्वाश्रयास्तथापि सात्विक-राजस-तामसशरीरिणां नृणां मध्ये सत्वतनौ सात्विकशरीरिणि देवप्रकृतौ जीवराशावेव श्रवण-भक्त्यादिश्रेयांसि स्युर्न राजस-तामसशरीरिषु मिश्रमनुष्येषु असुरेषुच इत्येकान्वयः ॥

मेले हेळिद श्रवण भक्ति मोदलादवुगळिंद दोरेयतक्क मुक्तिगे अधिकारियु यारेंदु आक्षेपमाडिदरे सत्वगुण स्वभाववुळ्ळवने अधिकारियेंदु हेळुवदक्कागि सत्व मोदलाद गुणगळन्नू हागु आ गुणगळ आश्रयगळन्नू हेळुत्तारे—सत्वगुण, रजोगुण मत्तु तमोगुण ई मूरू गुणगळु जडप्रकृतिय स्वरूपभूतवादद्दवु ( आ जडप्रकृतिगू ई गुणगळिगू एनू भेदविल्ल ); इवुगळिगे चित्प्रकृतियु ( रमादेवियु ) अभिमानिदेवतेयु ( नियामकळु ); हागू ई मूरू गुणगळु श्रीहरियु जगत्तन्नु सृष्टि माडुवदरल्लि ( जगत्तिगे ) उपादानकारणगळु ( उपादानकारणवेंदरे यावदादरोंदु वस्तुविन ( मण्णिन ) विकारदिंद हुट्टुव ( घटवेंब ) मत्तोंदु वस्तुवु आ मोदलिन ( मण्णिन ) वस्तुविनिंद सहितवागिद्दाग्यू बेरे ( घटवेंब ) हेसरिनिंद करेयल्पडुवदो आ होसदागि हुट्टुव ( घटवेंब ) वस्तुविगे आ मोदलिन ( अंदरे तन्न उत्पत्तिगे कारणवाद मृत्तिकेयु ) वस्तुवु उपादानकारण अथवा परिणामि कारणवेंदेनिसुवदु. परमात्मनु स्वतः ई गुणगळिंद रहितनादाग्यू अवुगळिगे नियामकनागि ई जगत्तिन उत्पत्ति, स्थिति, संहार इवुगळन्नु माडुवदक्कागि ओब्बने हरि, ब्रह्म, हर एंब हेसरुगळन्नु धरिसुत्ताने. अंदरे विष्णु, ब्रह्म, हर एंब संज्ञेगळिंद प्रकटनागुत्ताने. हेगंदरे—सत्वगुण-संबंधविल्लदाग्यू आ गुणक्के प्रवर्तकनागि ई जगत्तन्नु संरक्षिसुत्त ' विष्णु ' नामकनाद हरियु एरडनेयवरल्लि शेरदे प्रत्येकवागिरुवनु; चतुर्मुखनल्लिरुव 'ब्रह्म' नामक विष्णुवु रजोगुणसंबंधविल्लदाग्यू रजोगुणवन्नु उपादान कारणवन्नु माडि जगत्तन्नु सृष्टि माडुत्तलिरुवनु. 'शिव' नामकनाद विष्णुवु स्वतः तमोगुणरहितनादाग्यू आ गुणक्के प्रवर्तकनागि जगत्तिन लयवन्नु माडुत्त शिवनल्लिरुवनु. आ श्रीहरिय सन्निधानमात्रदिंदले कमलासन ( कमलद मेले कुळितुकोंडंथ चतुर्मुखनु ), वृषासन ( यत्तिन मेले कुळितिरुव रुद्रनु ) इवरिगे ब्रह्म मत्तु शिव एंदु नामगळु बंदिरुववु. आदरिंद ई मूरू हेसरुगळु आ विष्णुविनवे होर्तु लोकप्रसिद्धराद हरि, ब्रह्म, शिवर भेदवन्नु दूर माडुवदक्कागि अल्ल. ई भेदवन्नु दूर माडुवदक्कागियॆ ओब्बने ई मूरू हेसरुगळन्नु धरिसिरुवनेंद पक्षक्के ' ब्रह्म, विष्णु, ईश ई मूरू रूपगळु महात्मनाद विष्णुविनवे ' ' ब्रह्मनल्लि ब्रह्मरूपदिंदिरुवनु ' इवे मोदलाद वामनपुराण वचनक्के विरोध बरुवदु. ई प्रकार ई मूरू गुणगळु विष्णुविनन्नु आश्रयमाडिद्दाग्यू सात्विक, राजस मत्तु तामस शरीरउळ्ळ जनरल्लि सात्विक शरीरउळ्ळ देवस्वभावराद जीवरिगे श्रवण, भक्ति मोदलाद पुण्यसाधनगळु दोरेयुववु. आदरे राजस, तामस शरीरउळ्ळ मिश्र मनुष्यरिगू असुररिगू दोरेयुवदिल्ल.

सत्वतनोर्विष्णोः केवलं भवतीति दर्शयितुं मूर्तित्रयस्वरूपमाह सत्वमिति । सत्वादयः प्रकृतेर्गुणास्तैर्युक्त एकः परः पुरुषः इत्यादित्रिसंज्ञा धत्ते । किमर्थं जगतः स्थिति-सृष्टि-भंगार्थं तत्र तेषां त्रयाणां मध्ये ' सत्वगुणः तनुःशरीरं यस्य स ' सत्वतनुः तस्माद्विष्णोः श्रेयांसि स्युरिति वाणी न युक्ता, ' केवलो निर्गुणश्च ' इति श्रुतिव्याकोपात् । न चास्याः सर्वगुणराहित्यमर्थः । ' सत्वं ज्ञानमनंतं ब्रह्म । गुणाः सर्वेपि वेत्तव्या ध्यातव्याश्च न संशयः । आनंदादयःप्रधानस्य ' इति श्रुति-स्मृति सूत्रैर्ज्ञानादिगुणगणविधानात् । अत्रापि ' साक्षीचेता केवल ' इत्यादिसाक्षित्वादिगुणप्रतीतेश्च तस्मात्सत्वादिगुणराहित्यमेवास्या अर्थ इति संतोष्टव्यं ॥

( इन्नु अद्वैतमतद अर्थवन्नु बरेदु, अदन्नु खंडिसुवरु ) हरि, ब्रह्म, मत्तु हर ई मूवरलि सत्वशरीरनाद विष्णुविनिंदले सृष्टि-स्थिति-लयगळु आगुत्तवेंदु तोरिसुवदकागि मूरू मूर्तिगळ स्वरूपवन्नु हेळुवरु–सत्व मोदलादवुगळु प्रकृतिय गुणगळु. आ गुणगळिंद युक्तनाद ओब्बने परम पुरुषनु जगत्तिन सृष्टि-स्थिति-लयक्कागि ई हरि मोदलाद मूरु हेसरुगळन्नु धरिसुत्तान. ई मूरू मूर्तिगळलि सत्वशरीरनाद विष्णुविनिंदले पुण्यसाधनगळु दोरेयुत्तवे एंब ई अद्वैतपरवाद अर्थवु सरियादद्दल्ल. याकंदरे " परमात्मनु केवल निर्गुणनु " एंब श्रुतिगे विरुद्धवागुवदु हागू ई श्रुतियिंद परमात्मनु सर्वगुणगळिंदल्ल रहितनु एंब अर्थवन्नु माडबारदु. याकंदरे " ब्रह्मवु सत्यस्वरूपवादद्दु, ज्ञानस्वरूपवादद्दु, अनंतवादद्दु " मत्तु " आ ब्रह्मन एल्ल गुणगळु तिळिदुकोळ्ळलिके योग्यवादंथवु, ध्यानमाडालिके योग्यवादंथवु. इदक्केनू संशयविल्ल " " आनंदादिगुणगळु मुख्यवागि परमात्मन गुणगळु " एंदु श्रुति-स्मृति सूत्रगळु ज्ञान मोदलाद परमात्मन गुणगळन्नु हेळुवदरिंदल्ल मत्तु " परम चेतननु केवल साक्षियादवनु " एंदु साक्षित्वादि गुणगळ ज्ञानवागुवदरिंदल्ल आ श्रुतियिंद सत्व मोदलाद गुणगळिंद रहितनेंदु इष्टे अर्थवन्नु तिळकोळ्ळतक्कद्देंदु संतोषबडतक्कद्दु.

किंच हरि-विरिंच हरा इत्युक्तिं विहाय हरेत्युक्तेः प्रमाणसिध्दः कश्चिदर्थविशेषोस्तीति विज्ञायते । सच सकलसुरवरपुरटमुकुटपटलकोटितट परिघट्टितचरणकमलपरागैः श्रीमद्बादरायणांते वासिप्रवरैः श्रीमदानंदतीर्थभगवत्पादाचार्यैर्दर्शित इति नोस्माभिरत्र प्रयतितव्यं ॥ २४ ॥

मत्तु ई श्लोकदल्लि " हरि-विरिंचि-हरा " हीगे अनुवदन्नु बिट्टु " हरि-विरिंचि-हरा " एंदु अनुवदरिंद प्रमाणदिंद सिद्धवाद एनादरू विशेष अर्थवदे एंदु तोरुवदु. आदरे आ अर्थवु सकल श्रेष्ठ देवतिगळ भंगारद किरीटगळ तुदिगळिंद तिक्कल्पट्ट पादकमलद धूळियुळ्ळ श्रीबादरायणदेवर शिष्यरल्लि श्रेष्ठराद श्रीमदानंदतीर्थ पूज्यपादरिंद तोरिसल्पट्टद्दादरिंद नावु अदन्नु हेळुवदक्के प्रयत्नमाडुव कारणविल्ल ॥ २४ ॥

## पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ॥ तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनं ॥ २५ ॥

ननु त्रयाणां गुणानां प्राकृतत्वादविशेषेण कथं सत्वस्यैव श्रेयः प्रतिहेतुत्वमित्याशंक्य सात्विकानामेवोत्तमत्वेन ब्रह्मविद्याधिकारित्वप्रतिपादनाय गुणत्रितये सत्वगुणस्योत्तमत्वं सोदाहरणमाह पार्थिवादिति । अत्रोत्तमपदमध्याहृत्य व्याख्येयं । पार्थिवात्पृथिवीकार्याद्दारुणो-वृक्षात् । पार्थिवो धूम उत्तमः, लोकोपकारकमेघरूपत्वात्तस्मात् धूमात् पार्थिवोऽग्निरुत्तमः, कीदृशः ' त्रय्यां प्रतिपाद्यत इति ' त्रयीमयः-सकलपदार्थप्रकाशकः । अत्र यथा वृक्षधूमाग्नीनां पार्थिवत्वाविशेषेऽप्यग्निराधानेन संस्कृतो विशिष्टपुरुषार्थसिध्दये याज्ञिकैरुत्तमत्वेन पूज्यते, तथा प्राकृतात्तमसस्तमोगुणाद्रजोगुण उत्तमः, तस्मात्सत्वं-परब्रह्मादिसकलदेवतातत्वप्रकाशकः सत्वगुण उत्तमः । यद्यस्मात्सत्वगुणाद्ब्रह्मदर्शनं-ब्रह्मज्ञानं भवतीति शेषः । यत्सत्वं ब्रह्म दर्शयत्यपरोक्षयतीति वा । तस्मात्सात्विका एव ब्रह्मज्ञानाधिकारिण इति सिद्धं । अनेन चेतनानामपवर्ग-नरक-तमःप्राप्तियोग्यानां त्रैविध्यं सूचितं ॥ २५ ॥

ई मूरू गुणगळु प्रकृतिसंबंधउळ्ळवुगळु, आद्दरिंद अवुगळल्लि एनू हेच्चुकडिमे इल्ल, आदकारण सत्वगुणवे श्रेयस्सिगे साधनवु. हेगेंदरे सत्वगुणवुळ्ळवरे उत्तमराद्दरिंद ब्रह्मविद्येगे अधिकारिगळेंदु प्रतिपादन माडुवदक्कागि मूरू गुणगळल्लि सत्वगुणवे उत्तमवादद्देंदु उदाहरणसहितवागि हेळुवरु—ई श्लोकदल्लि ' उत्तम ' एंब पदवन्नु अध्याहार माडबेकु ( हेच्चिगे तक्कोळ्ळबेकु ). पृथिवियिंद हुट्टुव कट्टिगेय कित्तलू अदे पृथिवी ( कट्टिगेय द्वारा ) संबंधियाद होगेयु लोकोपकारकवाद मेघरूपवन्नु होंदुवदरिंद उत्तमवाद्दु. आ धूमद कित्तलू वेददल्लि प्रतिपाद्यवाद ( परंपरा ) पृथिवीसंबंधियाद अग्नियु उत्तमवाद्दु. ई उदाहरणदल्लि कट्टिगे, होगे मत्तु अग्नि ई मूरू पृथिवियल्लिये हुट्टि अवुगळल्लि एनू हेच्चुकडिमे इल्लदिद्दरु अग्नियु ब्राह्मणरिंद होमगळल्लि मंत्रपूर्वकवागि स्थापिसल्पट्टु संस्कारवन्नु होंदुवदरिंद यज्ञ माडतक्कवरिगे विशेष पुरुषार्थद सिद्धिगागि उपयुक्तवागुवदरिंद उत्तमवेंदु हेगे पूजिसल्पडुत्तदेयो आप्रकार प्रकृतिसंबंधियाद तमोगुणद कित्तलू ( प्रकृतिसंबंधियाद ) रजोगुणवु उत्तमवाद्दु, आ रजोगुणद कित्तलू परब्रह्म मोदलाद सकल देवतिगळ तत्ववन्नु प्रकाशमाडि तोरिसुव सत्वगुणवु उत्तमवाद्दु. सत्वगुणवु ब्रह्मज्ञानवन्नु माडिकोडुवदरिंद अथवा ब्रह्मन अपरोक्षज्ञानवन्नु माडिकोडुवदरिंद सत्वगुणवुळ्ळवरे ब्रह्मज्ञानक्के अधिकारिगळेंदु सिद्धवाद्दु. इदरिंद जीवरु मोक्षक्के योग्यरादवरु, नरकक्के योग्यरादवरु, मत्तु तमस्सिगे योग्यरादवरेंदु मूरु विधरेंदु सूचितवादंतायितु ॥ २५ ॥

भेजिरे मुनयोथाग्रे भगवंतमधोक्षजं ॥ सत्वं विशुद्धं क्षेमाय कल्पते नेतराविह ॥ २६ ॥

उक्तार्थे शिष्टाचारं दर्शयति भेजिर इति। अथ तस्मात्सात्विकानां उत्तमाधिकारित्वात् अग्रे-पूर्वं मुनयो ज्ञानिनो ब्रह्मादयोधोक्षजं भेजिरे। तस्मादिह गुणेषु विशुद्धं सत्वं क्षेमाय-मोक्षाय कल्पते, नेतरौ तमो-रजोगुणौ मुक्तये न कल्पेते इत्येकान्वयः ॥ २६ ॥

हिंदे हेळिद अर्थके शिष्टाचारवन्नु तोरिसुवरु—सत्वगुणवुळ्ळवरे उत्तमाधिकारिगळाद्दरिंद पूर्वदल्लि ज्ञानिगळाद ब्रह्म मोदलादवरु अधोक्षजनन्नु सेविसिदरु. आद्दरिंद ई मूरू गुणगळल्लि सत्वगुणदिंदले मोक्षप्राप्तियागुवदु, उळिद एरडु रजोगुण-तमोगुणगळिंदागुवदिल्ल ॥ २६ ॥

मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ॥ नारायणकलाः शांता भजंति ह्यनसूयवः ॥ २७ ॥

इदानीमपि सदाचारं दर्शयति ' मुमुक्षव ' इति। ब्रह्मादिपरमसात्विका वासुदेवं भेजिर इति यस्मादथ तस्मादसूयादिदोषरहिता दुस्तर संसारात् मुमुक्षवो-वर्तमान-भविष्यत्सात्विका अपि घोररूपान् राजस-तामसान् भूतपतीन्-रुद्रादीन् हित्वा शांताः-परिपूर्णसुखात्मिकाः वासुदेवकलाः भगवन्मूर्तीः संप्रति भजंति भजिष्यंति हि चेत्येकान्वयः ॥ २७ ॥

ईगादरू नडेद सदाचारवन्नु तोरिसुवरु—सत्वगुणवुळ्ळवरल्लि परम श्रेष्ठराद ब्रह्म मोदलादवरु वासुदेवनन्नु सेविसिद्दरिंद असूया मोदलाद दोषरहितराद मत्तु दाटलिके अशक्यवाद ई संसारदिंद मुक्तियन्नु अपेक्षिसुव, ईगे इरुव हागू मुंदिन सात्विकरादरू भयंकर स्वरूपराद राजस-तामसगुणवुळ्ळ भूतेश्वरराद रुद्र मोदलादवरन्नु बिट्टु पूर्णसुखस्वरूपियाद वासुदेवन मूर्तिगळन्नु भजन माडुत्तारे मत्तु भजन माडुवरु ॥ २७ ॥

रजस्तमःप्रकृतयः समशीलान भजंति वै ॥ पितृ-भूत-प्रजेशादीन् श्रियैश्वर्य-प्रजेप्सवः ॥ २८ ॥

इदानीं प्रसंगात्तामस-राजससेव्यानाह ' रज ' इति। श्रियैश्वर्य-प्रजेप्सवः रजस्तमःप्रकृतयः पुरुषाः समशीलान् पितृ-भूत-प्रजेशादीन् भजंतीत्येकान्वयः। निर्दोषं हि समं ब्रह्म, इति समं ब्रह्म तच्छीलान्-यत्सेवकस्य यच्छीलं सेव्यस्यापि तच्छीलमस्तीति वा समशीलान्। श्रीकामः प्रजेशानैश्वर्यकामः भूतपतीन्प्रजाकामः पितॄन्, श्रियं च ऐश्वर्यं च प्रजां च प्राप्तुमिच्छंतः श्रियैश्वर्य-प्रजेप्सवः ॥ २८ ॥

इन्नु प्रसंगक्के अनुसरिसि, राजस-तामस जीवरिंद सेव्यराद देवतिगळन्नु हेळुवरु–श्री-द्रव्यसंपत्तन्नू, **ऐश्वर्य**–यजमानत्ववन्नू, **प्रजा**–संतानवन्नू अपेक्षिसुव राजस-तामसरु, परब्रह्मनंते ( अन्यदेवतिगळु ) स्वातंत्र्य-सर्वोत्तमत्व गुणवुळ्ळवरेंदु अथवा तम्मंते राजस-तामस गुणवुळ्ळवरेंदु, द्रव्यापेक्षेयुळ्ळवनु दक्षप्रजेश्वर मोदलादवरन्नु, अधिपतियागबेकेंबवनु भूतपतिगळाद रुद्र मोदलादवरन्नु, संतानापेक्षेयुळ्ळवनु अर्यमा मोदलाद पितृगळन्नु भजिसुत्तारे ॥ २८ ॥

## वासुदेवपरा वेदा वासुदेवपरा मखाः ॥ वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २९ ॥

**सकलशास्त्रतात्पर्यपर्यालोचनया सकलैरवश्यं सेव्यः श्रीनारायणएवेत्याभिप्रेत्याह ' वासुदेवपरा ' इति । अत्र वेदा वासुदेवपरा इत्यादिप्रतिपादम न्वेतव्यं । वासुदेवगुणोत्कर्षप्रतिपादनतात्पर्यवंतः, मखाः–संसारमदं खनंतीति नाशयंतीति मखाः–अग्निष्टोमादयः वासुदेवोद्देश्या,ः नान्योद्देश्याः । योगाः-अष्टांगाः, वासुदेवविषयाः श्रुतिस्मृतिविहितसंध्योपासनादिकाः क्रियाः ॥ २९ ॥**

सकल शास्त्रगळ तात्पर्यवन्नु विचारमाडि नोडलागि एल्लरिंद अवश्यवागि सेविसलिक्के योग्यनु नारायणने एंब अभिप्रायदिंद हेळुवरु–वेदगळु वासुदेवन गुणोत्कर्षवन्नु प्रतिपादन माडुवदरल्लि तात्पर्यवुळ्ळवुगळु; ( नानु सुखी एंब ) संसार मदवन्नु नाशमाडुव अग्निष्टोम मोदलाद यज्ञगळु वासुदेवन उद्देशवागिये इरुववु; अन्यर उद्देशवागि अल्ल. एंटु अंगगळिंद सहितवाद योगगळु वासुदेवन विषयकवे. श्रुति-स्मृतिगळल्लि हेळिद संध्योपासने मोदलाद क्रियेगळु वासुदेवन उद्देशवागिये इरुववु ॥ २९ ॥

## वासुदेवपरं ज्ञानं वासुदेवपरं तपः ॥ वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ ३० ॥

**ज्ञानं-औपनिषदं, तपः-कृच्छ्रचांद्रायणादिकायक्लेशः, धर्मो-दानादिः, गम्यत इति गतिः, फलं-परलोकः । अनेन हरेरखिलऋग्वेदादिशास्त्रमुख्य-विषयत्वेन सर्वोत्तमत्वमुक्तं ॥ ३० ॥**

१ यमो नियमश्चासनं च प्राणायामस्ततःपरं । प्रत्याहारो धारणा च ध्यानसार्धं समाधिना । अष्टांगान्याहुरेतानि योगिनां योगसिद्धये.





उपनिषदगळिंद हुट्टुव ज्ञानवु वासुदेवन विषयवादद्दु; कृच्छ्रचांद्रायण मोदलाद देहवन्नु कष्ट बडिसुव व्रतगळु वासुदेवन उद्देशवागिये इरुववु; दान मोदलाद धर्माचरणवु वासुदेवन उद्देशवागिये इरुवदु; परलोकप्राप्ति एंब फलवु वासुदेवन अधीनवागि इरुवदरिंदल, आ हरियु ऋग्वेद मोदलाद शास्त्रगळल्लि मुख्य विषयनाद्दरिंदल सर्वोत्तमनेंदु हेळिदंतायितु ॥ ३० ॥

**स एवेदं ससर्जाग्रे भगवानात्ममायया ॥ सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३१ ॥**

अत्र हेतुमाह 'स एव' इति । यः सर्ववेदांतादिमुख्यविषयः परमसात्विकब्रह्मादीष्टदेवता वासुदेवः सोसावेवागुणः-सत्वादिगुणविधुरः, मुख्यकारणं वा, विभुर्व्याप्तः भगवान्नारायणः अग्रे-सृष्टेः पूर्वं, आत्ममायया-स्वेच्छया निमित्तकारणरूपया, सदसद्रूपया-व्यक्ताव्यक्तरूपया गुणमय्या-सत्वादिगुणात्मिकजडप्रकृत्योपादानकारणरूपया चेदं जगत्ससर्जेत्येकान्वयः । अतो विष्णुरेव सत्यजगत्स्रष्टृत्वात्सर्वोत्तम इत्यर्थः ॥ ३१ ॥

आ वासुदेवने सर्वोत्तमनेंब विषयके कारणवन्नु हेळुवरु—एल्ल वेदांत मोदलादवुगळल्लि मुख्य विषयनाद, परम सात्विकराद ब्रह्म मोदलादवरिगे इष्टदेवतियाद (आ वासुदेवने) सत्वादिगुणगळिंद रहितनाद अथवा मुख्य कारणनाद, एल्ल कडेयल्लियू व्याप्तनाद आ वासुदेवने सृष्टिय पूर्वदल्लि निमित्तकारणवाद तन्न इच्छेयिंद उपादानकारणवाद, व्यक्ताव्यक्तरूपवुळ्ळ, सत्वादिगुणस्वरूपवाद जडप्रकृतियिंद ई जगत्तन्नु सृष्टिमाडिदनु. आद्दरिंद विष्णुवे सत्यवाद जगत्तन्नु सृष्टिमाडुवदरिंद सर्वोत्तमनेंदु अर्थवु ॥ ३१ ॥

**तया विलसितेष्वेषु गुणेषु गुणवानिव ॥ अंतःप्रविष्ट आभाति विज्ञानेन विजृंभितः ॥ ३२ ॥**

नियंतृत्वमपि तदेकनिष्ठमित्याह तयेति । स हरिः तया सदसद्रूपया विलसितेषु-भूत-भौतिकदेहेंद्रियाद्यात्मना परिणतेष्वेषु गुणेषु अंतःप्रविष्टो गुणवान् जीवइवाभाति । अज्ञानामिति शेषः । कुतः विज्ञानेन विजृंभितः-विज्ञानपूर्णः । इदं हेतुगर्भं विशेषणं । नानाकर्मविपाकिनां जीवानां विज्ञानाभावादस्य परिपूर्णत्वात्तेन नियम्यत्वं तेषामिति भावः ॥ ३२ ॥

नियामकत्व (एल्लर मेले अप्पणे माडोण) वादरू अवनोब्बन (आ विष्णुविन) अधीनवादद्दे एंदु हेळुवरु—आ श्रीहरियु, कार्य-कारणस्वरूपळाद प्रकृतियिंद पंचमहाभूतगळ रूपदिंदल, अवुगळ विकारदिंदाद देह इंद्रिय मोदलाद स्वरूपदिंदल विकारहोंदिद ई गुणगळल्लि प्रविष्टनागि, अज्ञानिगळिगे सात्विक मोदलाद गुण-

गळिंद युक्तनाद जीवनंते तोरुवनु. याकंदरे सकल ज्ञानदिंद पूर्णनाद हरियु, नानाकर्मगळ फलवन्नु अनुभविसुव जीवरुगाळिगे सकल ज्ञानवु इरदे इरुवदरिंदल, तानु पूर्णज्ञानियाद्दरिंदलू आ जीवरगळिगे आ हरियु नियामकनु ॥ ३२ ॥

## यथा व्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ॥ नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३३ ॥

न च स्थानभेदादद्वयस्य हरेर्भेदाशंका कार्येत्याह यथेति । यथैको वन्हिः स्वयोनिषु-स्वस्य व्यक्तिस्थानेषु दारुषु व्यवहितः-भूतानामदृश्य तया स्थितः नानेव भाति । मथनादिनेति शेषः । दारुणामानंत्यात्तथैको विश्वात्मा विश्वव्याप्तः पुमान् भूतेषु प्रविष्टो नानेव भाति, न तु नाना, 'नेह नानाऽस्ति किंचन' इति श्रुतेः । अग्नेः कश्चिद्विशेषसंभवेऽपि नास्य कश्चिद्विशेष इति 'च' शब्दार्थः ॥ ३३ ॥

स्थानभेददिंद परस्पर भेदविल्लद श्रीहरियल्लि भेदवुंटेंदु शंका माडबारदेंदु हेळुत्तारे--ओंदे बेंकेयु तानु प्रकटवागुव स्थळगळाद कट्टिगेगळल्लि जनरिगे काणदंते इद्दु, कट्टिगेगळु बहळागिरुवदरिंद अवुगळल्लेल्ल घर्षण मोदलादवुगळिंद व्यक्तवागि अनेकवेंबुवंते हेगे तोरुवदो अदे प्रकार एल्ल जगत्तन्नु व्यापिसिरुव परमात्मनु शरीरगळल्लि प्रवेशमाडि अनेकनेंदु तोरुत्ताने. आदरे 'परमात्मनल्लि अनेकत्वविल्ल' ई श्रुतिप्रकार अनेकनल्ल. अग्नियल्लि एनादरू हेच्चुकडिमेयु संभविसिदाग्यू इवनल्लि एनू हेच्चुकडिमे इल्ल एंब अर्थवन्नु 'च' शब्दवु हेळुवदु ॥ ३३ ॥

## असौ गुणमयैर्भावैर्भूतसूक्ष्मेंद्रियात्मभिः ॥ स्वनिर्मितेषु निर्विष्टो भुंक्ते भूतेषु तद्गुणान् ॥ ३४ ॥

न च दुर्भगशरीरेषु प्रविष्टस्य जीववत् दुःखभोगः संभाव्यत इत्याह असाविति । असौ परमात्मा गुणमयैः–सत्वादिगुणविकारैः, भूतसूक्ष्मेंद्रियात्मभिः-पंचमहाभूत, पंचतन्मात्रा, दशेंद्रिय मनोभिर्भावैः तत्त्वैरुपादानरूपैः स्वनिर्मितेषु भूतेषु, निर्विष्टः-योगैश्वर्यादसंगतया प्रविष्टस्तद्गुणानानंदादीनेव भुंक्ते, न तु दोषनिमित्तदुःखादीन् । तस्माद्दुर्भगशरीरस्थत्वेऽपि न दुःखादिभोगस्तस्य, स्वातंत्र्यादित्यर्थः ॥ ३४ ॥

मत्तु दुष्टशरीरगळल्लि प्रवेशमाडिद जीवनंते इवनिगे दुःखभोगवु संभविसुवदिल्लेंदु हेळुवरु–ई परमात्मनु सात्विक मोदलाद गुणगळ विकारवाद पंचमहाभूतगळु, आ महाभूतगळ पंच मात्रागळु, दश इंद्रियगळु मत्तु मनःसु एंब उपादान कारणगळाद तत्त्वगळिंद, तानु अवुगळल्लि प्रवेशमाडि, निर्माणमाडल्पट्ट देहगळल्लि

योगैश्वर्यसंपन्ननादृरिंद आ गुणगळ लेपवु तनगे एनू हत्तदंते प्रवेशमाडि, अवुगळ संबंधियाद आनंद मोदलाद गुणगळन्ने उपभोग माड्डुत्ताने. दोषगळिंद हुट्टुव दुःख मोदलादवुगळ अनुभववन्नु तेगेदुकोळ्ळुवदिल्ल. आद्दरिंद दुष्ट शरीरगळल्लि इद्दाग्यू अवनु स्वतंत्रनाद्दरिंद दुःख मोदलादवुगळ अनुभववु अवनिगे आगुवदिल्ल.

ई मेले हेळिद पंचमहाभूत मोदलाद तत्त्वगळ विवरवु २ने मत्तू ३ने स्कंधगळल्लि हेळल्पडुवदु. ॥ ३४ ॥

## भावयन्नेष सत्वेन लोकान्वै लोकभावनः ॥ लीलावतारानुगतास्तिर्यङ्नर-सुरादिषु ॥ ३५ ॥

## इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे द्वितीयोध्यायः ॥ २ ॥

उत्तराध्याये 'अथाख्याहि' इति प्रश्नं परिहरिष्यन् तदर्थं संक्षेपतो दर्शयति 'भावयन्' इति । लोकभावनः-जगदुत्पादकः । सत्वेन गुणेन इतरगुणानाभिभूय लोकान् भावयन्-पालनेन वर्धयन्नेष परमपुरुषस्तिर्यङ्नर-सुरादिषु तिर्यक्षु-वराहादिजातिषु, नरेषु-मनुष्येषु देवेषु, 'आदि' शब्दात् स्तंभादिषु लीलावतारानुगतो भवतीति विशेषणान्वयः । लीलयैवावतारान् अनुगच्छति, न तु पूर्वकर्मणा । यो योवतारो जगदवनादावनुकूलः स्यात्तं तमवतारं गृण्हातीत्यस्मिन्नर्थे 'अनु' शब्दः ॥ ३५ ॥

इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे पदरत्नावल्यां टीकायां द्वितीयोध्यायः ॥ २ ॥

हिंदे 'आ परमात्मन अवतार-कथेगळन्नु नमगे हेळिरि' एंदु शौनकरु माडिद प्रश्नक्के मुंदिन अध्यायदल्लि उत्तरवन्नु हेळलिच्छिसुव सूतनु अदर सारांशवन्नु ई श्लोकदिंद हेळुत्ताने- ई जगत्तन्नु हुट्टिसुव परमात्मनु सत्वगुणदिंद इतर गुणगळन्नु हिंदे माडि अदरिंदले लोकवन्नु पालनमाडुत्त वराह मोदलाद जातिगळल्लियू, मनुष्यजातियल्लियू, देवतिगळल्लियू, स्तंभ मोदलादवुगळल्लियू क्रीडेयिंद ( पूर्वकर्मगळिंदल्ल ) अवतारगळन्नु माडुवनु. जगत्तन्नु संरक्षिसुवदक्के याव याव अवतारगळु अनुकूलवो आया अवतारगळन्नु धरिसुवनेंदु तोरिसुवदक्कागि 'अनु' एंब उपसर्गवन्नु उपयोगिसिरुवरु. ॥ ३५ ॥

हींगे श्रीमद्भागवतवेंब महापुराणदल्लि मोदलने स्कंधदल्लि मूल मत्तु टीकेगळिगनुसारवागि अलंकरिसिरुवंथ 'सुखार्थबोधिनि' एंब कन्नड टीकेयल्लि एरडने अध्यायवु मुगिदितु ॥ २ ॥

सूत उवाच—जगृहे पौरुषं रूपं भगवान् महदादिभिः ॥ संभूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥

भावयन्नेषसत्वेनेति द्वितीयाध्यायांते सूचितानवतारान् कथयितुं प्रथमतः परमपुरुषाख्यभगवदभिव्यक्तिप्रकारमाह जगृह इति । भगवानादौ लोकसिसृक्षया महदादिभिः संभूतं षोडशकलं पौरुषं रूपं जगृह इत्येकान्वयः । प्रलयकालीनस्वगूहकतमःपानेन परमपुरुषाख्यं निजं रूपमाविश्चक्रे, न तु विराड्रूपं ॥

एरडने अध्यायद कोनेगे सूचितवाद अवतारगळन्नु हेळुवदक्कागि मोदलु परमपुरुषनेंब परमात्मन प्रकटनेय प्रकारवन्नु हेळुवरु–( सूतनु अंदनु ) परमात्मनु मोदलु लोकवन्नु सृष्टिमाडुव अपेक्षेयिंद महत्तत्त्व मोदलादवुगळिंद सहितवाद षोडश कलायुक्तवाद पुरुषनेंब रूपवन्नु धरिसिदनु. अंदरे प्रळयकालदल्लि तन्नन्नु आच्छादिसिद लक्ष्म्यात्मकवाद तमःसन्नु प्राशनमाडि, परमपुरुषनेंब तन्न निजरूपवन्नु प्रकटमाडिदनु. अदु विराट्रूपवल्ल.

महदादिभिः प्रलयकाले स्वोदरनिविष्टैर्महदहंकारादिसप्तप्रकृति-विकृतिमिः शरीरस्थानीयाभिः संभूतं-सहितं ॥

महदादिभिः प्रलयकालदल्लि तन्न उदरदल्लि इडल्पट्ट शरीरस्थानदल्लिरुव महत्तत्त्व, अहंकारतत्त्व, पंचमहाभूतगळु ई प्रकार ७ प्रकृतिय विकारगळिंद संभूतं - सहितवाद.

' कलाश्च पंचभूतानि ज्ञान-कर्मेंद्रियाणि च । पंचपंच मनश्चेति षोडशोक्ता महर्षिभिः ' इति । षोडशकला अंतर्गता यस्मिन्निति तत् षोडशकलं ' यस्मिन्नेताः षोडशकलाः प्रभवंति ' इति श्रुतेः । प्राणादिषोडशकलासहितं वा ॥

षोडश कलागळु यावुवेंदरे हेळुवरु–५ पंच महाभूतगळु, ५ ज्ञानेंद्रियगळु. ५ कर्मेंद्रियगळु मत्तु १ मनःसु. ईप्रकार १६ कलागळु एंदु महर्षिगळिंद हेळल्पट्टिरुववु. यावनल्लि ई १६ कलागळु ( आश्रयमाडिकोंडु ) इरुववो आ षोडशकलाउळ्ळ पुरुषरूपवन्नु. ' याव पुरुषरूपदल्लि ई हदिनारु कलागळु सृष्टिय पूर्वदल्लि तोरुववो ' एंब श्रुतियिंद ५ प्राणगळु, ५ उपप्राणगळु, ५ भूतगळु मत्तु १ मनःसु ईप्रकार १६ कलागळिंद सहितवाद ( पुरुषरूपवु ) एंदादरू अर्थवु.

सिसृक्षया-सृष्टीच्छया यः प्राक् जगत्संव्हत्य सूक्ष्मरूपतया स्वोदरे निवेश्य प्रलयोदके श्रीपर्यंके श्रीभुजांतर्गतः प्रकृतिमयतमसा निगूढस्थितः सएव परमपुरुषः पुनरुत्पत्तिकाले स्वगूहकं तमः पीत्वात्मानं प्रकाशितवानित्येतदेवात्र पुरुषरूपग्रहणमभिप्रेतं, नतु रामकृष्णादिवल्लोकव्यक्त्यभिप्रायोपीत्युक्तंभवति ॥ १ ॥

कौरवर देशके बंदु हस्तिनापुरदल्लि ओम्मे उन्मत्तरंते अभिमानरहितनागियू, ओम्मे मूकरंते मातांडदेयू, मत्तोम्मे जडवस्तुविनंते स्वतः देहद याव व्यापारवन्नू माडदेयू तिरुगाडुव आ शुकमुनियन्नु आ हस्तिनापुरवासिगळु इवने शुकनेंदु हेगे तिळिदरु ? पुरवासिगळिगू सह अवन गुर्तु हिडियुवदु दुर्लभवादद्दु; अंदमेले अंतःपुरद जनरिगू अदरल्लियू विशेषवागि परीक्षितराजनिगू परम दुर्लभवेंदेनु हेळबेकु ॥ ५ ॥

**कथं वा पांडवेयस्य राजर्षेर्मुनिना सह ॥ संवादः समभूत्तात यत्रैषा सात्वतीश्रुतिः ॥ ६ ॥**

**तद्दर्शनानंतरकालीनस्तेन सह संवादः सुतरामसुलभ इत्याशयवानाह कथंवेति । यत्र ययोः संवादे सात्वती हरेस्तत्त्वसंबंधिनी श्रुतिर्वर्तते तादृशः संवादः पांडवेयस्य राजर्षेः परीक्षितः तेन मुनिना सह कथंवा समभूत् । न कथमपि घटत इत्येकान्वयः ॥ ६ ॥**

अवन दर्शनानंतरदल्लि अवन संगड आगुव संवादवंतू अतिशय दुर्लभवादद्देंब अभिप्रायदिंद अन्नुवरु—याव संवाददल्लि परमात्मन संबंधियाद ई ' संहिते 'यु इरुवदो, पांडवर वंशदल्लि हुट्टिद राजर्षियाद परीक्षितराजनिगू आ मुनिगू आद आ संवादवु हेगे संभविसितु ? याव प्रकारदिंदादरू दुर्लभवेंदु अंदरु ॥ ६ ॥

**स गोदोहनमात्रं हि गृहेषु गृहमेधिनां ॥ अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमं ॥ ७ ॥**

**इतोपि तस्य तेन सह संवादो दुर्घट इत्याशयवानाह स इति । तदाश्रमं तेषां गृहस्थानां सतां गृहं तीर्थीकुर्वन्-स्वपादक्रमणेन पवित्रीकुर्वन् महाभागः शुकः गृहमेधिनां गृहं गत्वा पाणिभिक्षामाचरन् गोदोहनमात्रं ततो नाधिकं अवाङ्मुखतयैकमनास्तिष्ठति, परमन्यतो याति हि यस्मात्तद्दर्शनमसुलभमित्येकान्वयः ॥ ७ ॥**

ई मुंदे हेळुव कारणदिंदादरू आ शुकमुनिय संगड संवादवु दुर्लभवादद्देंब अभिप्रायदिंद हेळुवरु—गृहस्थाश्रमधर्मगळन्नु आचरिसुव सज्जनराद गृहस्थर मनेगळिगे मात्र पाणि भिक्षेय देशेयिंद होगि, ( कैय्यल्लिये भिक्षेयन्नु हाकिसिकोंडु, अल्लिये अदन्नु तिंदुबिडुवदु ) तन्न गमनमात्रदिंद अवर मनेगळन्नु पवित्र माडुत्त ( '**गोदोहनमात्रं**' आकळवु हिंडुवष्टु कालद वरेगे एंदु अर्थ माडिदरे केलवु आकळुगळु दोड्ड केच्चलुळ्ळवुगळादद्दरिंद अवुगळन्नु हिंडुवदके बहळ वेळेयु हत्तुवदु, स्वल्पु क्षीरवुळ्ळवुगळन्नु हिंडुवदक्के स्वल्पु कालवु हत्तुवदु, आद्दरिंद अदु नियतवादद्दल्ल. हागू ' मात्र ' शब्दद प्रयोजनवू उळियुवदिल्ल. ) आकळ मोलेयिंद हालिन धारागळु बीळुवदक्के बेकागुव अवकाशद वरेगे मात्र केळगे मोरे माडिकोंडु एकाग्रमनःसुळ्ळवनागि निल्लुवनु, मत्तु मुंदे एरडने कडेगे होगुवनु. आद्दरिंद अवन ( शुकाचार्यन ) दर्शनवु दुर्लभवादद्दु ॥ ७ ॥

**अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमं ॥ तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ८ ॥**

किंच हे सूत, सूज्ञाः अभिमन्युसुतं परीक्षितं भागवतश्रेष्ठं प्राहुः, ततः किमिति तत्राह तस्येति । तस्य-परीक्षितः महाश्चर्यं, श्रोतॄणामिति शेषः । जन्म-कलिबंधनादीनि कर्माणि च अस्माकं गृणीहीत्यन्वयः ॥ ८ ॥

हागू एलै सूतने, अभिमन्युविन मगनाद आ परीक्षितराजनु भगवद्भक्तरालि श्रेष्ठनेंदु सूज्ञरु हेळुत्तारे. आद्दरिंद केळुवदक्के आश्चर्यकरवाद अवन जन्मवन्नू मत्तु कलिय बंधन मोदलाद अवनु माडिद केलसगळन्नू नमगे हेळु ॥ ८ ॥

**स सम्राट् कस्य वा हेतोः पांडूनां मानवर्धनः ॥ प्रायोपविष्टो गंगायामनादृत्याधिराट् श्रियं ॥ ९ ॥**

तस्य वैराग्यहेतुं पृच्छति स इति । स सम्राट्-अप्रतिहताज्ञश्चक्रवर्ती कस्य वा हेतोरधिराट् श्रियं-चक्रवर्तिसंपदं लक्ष्मीमनादृत्य-तृणवत्कृत्वा गंगायां प्रायोपविष्टोभूदित्यन्वयः ॥ ९ ॥

आ परीक्षितराजनिगे वैराग्य हुट्टुव कारणवन्नु केळुवरु—पांडवर कीर्तियन्नु बेळिसुव चक्रवर्तियाद आ परीक्षिद्राजनु याव कारणदिंद चक्रवर्तिय ऐश्वर्यवन्नु बिट्टु गंगातीरदल्लि प्रायोपवेशक्के ( अन्नोदकवन्नु बिट्टु प्राणबिडुवदक्के कूडुव तपःसिगे ) कुळितनु ? ॥ ९ ॥

**नमंति यत्पादनिकेतमात्मनः शिवाय चानीय धनानि शत्रवः ॥ कथं स वीरः श्रियमंग**
**दुस्त्यजामियेष चोत्स्रष्टुमहो सहासुभिः ॥ १० ॥**

एवंविधश्रीसंगत्यागे महत्कारणेन भवितव्यं, तत्किमित्याशंक्याह नमंतीति । शत्रवः-मंडलपतयः, आत्मनः शिवाय-स्वकल्याणाय धनानि चानीय यस्य परीक्षितः पदयोर्निकेतं-पीठाख्यस्थानं नमंतीत्यन्वयः । अंग-सूत, स दुस्त्यजां श्रियं अधिराज्यसंज्ञां उत्स्रष्टुं-हातुं इयेष-ऐच्छदहो । आश्चर्यमेतदतो महता हेतुना भवितव्यं तत्किमिति भावः ॥ १० ॥

ई प्रकारवागि ऐश्वर्यवन्नु त्यागमाडबेकादरे एनादरू महत्तवाद कारणवु इरबेकु. अदु यावदेंदु केळुवरु--शत्रुगळु तम्म कल्याणद देशेयिंद धनवन्नु तंदु याव परीक्षितराजन पादपीठके नमस्करिसुवरो, धीरनाद आ राजनु तन्न प्राणगळिंदादरू बिड्डवदके अशक्यवाद साम्राज्यद संपत्तनु त्याग माड्डवदके इच्छिसिदनु, इदु बहळ आश्चर्यकरवादद्दु; आद्दरिंद एनादरू महत्तवाद कारणवु इरुवदु, अदु यावदु ? ॥ १० ॥

शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः ॥ जीवंति नात्मार्थमसौ परां श्रियं मुमोच निर्विद्य कुतः कलेवरं ॥ ११ ॥

पुनरपि तदेव पृच्छति शिवायेति । ये उत्तमश्लोकपरायणा जनाः ते लोकस्य शिवादिप्राप्तये जीवंति, न स्वार्थं जीवंतीत्यन्वयः । तस्मात्परार्थैकजीवनोऽसौ कस्मात्कारणात् परामुत्कृष्टां श्रियं निर्विद्य-विरज्य कलेवरं-देहं मुमोचेत्यन्वयः ॥ ११ ॥

मत्तादरू अदे विषयवन्ने प्रश्नमाड्डवरु—यारु पुण्यकीर्तियाद परमात्मनल्लि आसक्तरो अवरु लोकहितार्थवागिये बदुकुवरे होर्तु तम्म सुखक्कागि बदुकुवदिल्ल. आद्दरिंद परकीयर देशेयिंदले बदुकिरतक्क ई परीक्षितराजनु एनुकारण अत्युत्कृष्टवाद (परकीयर उपकारक्कागिद्द ऐश्वर्यवन्नु) ऐश्वर्यवन्नु परित्याजिसि देहवन्नु बिट्टनु? ११

तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किंचन ॥ मन्ये त्वां विषये वाचां स्नातमन्यत्र छांदसात् ॥ १२ ॥

इहास्यामवस्थायां प्रश्नराशौ यत्किंचित्प्रश्नरूपं पृष्टस्त्वं तत्सर्वं किंचनेत्यनुर्वरीकृत्य सम्यगाचक्ष्व । कुतः छांदसाद्वेदविषयादन्यत्र-पुराणादौ, वाचां विषये स्नातं-निष्णातं मन्य इति यस्मात्तस्मादित्यन्वयः ॥ १२ ॥

बहुदिवस माडतक्क ई यज्ञद निमित्तदिंद श्रीहरिय कथेगळन्नु श्रवणमाड्डव दीक्षेयल्लि, प्रश्नमाडतक्क विषयगळु बहळ इद्दाग्यू स्वल्पु प्रश्नगळन्नु मात्र केळलपट्ट नीनु स्वल्पे प्रश्नगळेंदु हेळुव भागदल्लि एनू उळिसदे एल्लवन्नु सरियागि हेळु. यार्केंदरे नीनु वेदभागद होर्तु पुराण मोदलाद मातुगळ विषयदल्लि पारंगतनेंबदन्नु नानु बल्लेनु ॥ १२ ॥

सूत उवाच—द्वापरे समनुप्राप्ते तृतीये युगपर्यये ॥ जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १३ ॥

कस्मिन्युगे इति प्रश्नं परिहरति द्वापर इति । कृतयुगापेक्षया तृतीये द्वापरे युगे युगपर्यवसाने समनुप्राप्ते सति हरेः कलयांशेन पराशरात्परा-कृतः शरो हिंसा येन स तथोक्तः तस्माद्वासव्यां-वसोरुपरिचरस्य पुत्र्यां सत्यवत्यां योगी-नित्यज्ञानी नाम्ना व्यासो जातोवतीर्णोतो द्वापरे युगपर्य-वसाने भागवतप्रवृत्तिरिति भावः ॥ १३ ॥

याव युगदल्लि ई भागवतवु होरटितेंब प्रश्नक्के उत्तरवन्नु हेळवरु–कृतयुगदिंद मूरनेदाद द्वापारयुगद अंत्यभागदल्लि परमात्मनु पराशरऋषियिंद सत्यवती देवियल्लि नित्यज्ञानियाद वेदव्यासनेंब हेसरिनिंद अवतरिसिदनु. आद्दरिंद ई भागवतवु द्वापारयुगद कोनेय भागक्के रचिसल्पट्टितेंब उत्तरवु. पराशरः हिंसेयु यावनिंद बिडल्पट्टदेयो अवनु पराशरनु. वासवी एंदरे ' उपरिचर ' नेंब वसुविन मगळु ॥ १३ ॥

## स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः ॥ विविक्त एक आसीन उदिते रविमंडले ॥ १४ ॥

अवतारप्रयोजनमाह स कदाचिदिति । स व्यासो भगवान् शुचिः-शुद्धः, कदाचित्सरस्वत्या नद्या जलं उपस्पृश्य संध्याक्रियादिकं निर्वर्त्य, पश्चाद्रविमंडले उदितेसति तत्तटे विविक्ते-एकांते स्वाश्रम एवासीन एकाकी ॥ १४ ॥

ई व्यासावतारवन्नु माडुव प्रयोजनवन्नु हेळुवरु–शुचिर्भूतराद वेदव्यासरु ओंदानोंदु दिवस सरस्वती नदियल्लि संध्यादि क्रियागळन्नु मुगिसि, अनंतर सूर्योदय-वागलु अदे नदिय दंडेयमेले एकांतस्थळदल्लिरुव तम्म आश्रमदल्लिये ओब्बरे कुळितिरलु ॥ १४ ॥

## परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ॥ युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १५ ॥

परावरज्ञः-कालत्रयज्ञानी स सर्वतः सारः सर्वोत्तमः ऋषिर्कुलावतीर्णः, परावरज्ञत्वे हेतुर्वा, त्रिकालदर्शित्वाद्वा । अव्यक्तरंहसा-अनभिव्यक्तवे-गेन भुवि युगेयुगे प्राप्तं युगधर्मव्यतिकरं-युगधर्मसांकर्यं ॥ १५ ॥

---

१ पूर्वऋषिः-ऋषिजातीय इत्यर्थ उक्तः । अधुना ऋष-ज्ञान इति धातुव्याख्यानात्तादृश धातुनिष्पन्नस्य ' ऋषि ' शब्दस्य निरुपपदत्वेन सार्वज्ञार्थकत्वमिति प्रकारांतरं मनसि निधायाह परावरेति ॥ सामान्य-विशेषत्वाभ्यां हेतु-तद्भाव इति भावः ' ऋषिस्त्रिकालदर्शीस्यात् ' इति वचनानुसारेणार्थमाह त्रिकालेति । अस्मिन् पक्षे दूरस्थ-समीपस्थज्ञः उत्तमाधमज्ञोवा ' परावरज्ञ ' इति मूलार्थो विविक्षित इति भावः ।

मूरू कालद ज्ञानवुळ्ळवनू, सर्वरल्लि श्रेष्ठनू, ऋषिकुलदल्लि अवतरिसिदवनू, तोरदिद्द वेगवुळ्ळ कालदिंद ई भूलोकदल्लि प्रतियुगके बरुव धर्मगळ सांकर्य (ओंदु युगद धर्मगळन्नु मत्तोंदु युगदल्लि आचरिसोण) वन्नू ऋषिः ऋषिकुलदल्लि हुट्टिदवनु अथवा उत्तमाधम ज्ञानउळ्ळवनु. त्रिकालज्ञानियादवनु ॥ १५ ॥

**भौतिकानां च भावानां शक्तिऱ्हासं च तत्कृतं ॥ अश्रद्दधानान्निःसत्वान् दुर्मेधान् ऱ्हसितायुषः ॥१६॥**

तथा तत्कृतं-कालकृतं, भौतिकानां-भूतकार्याणां भावानां-पदार्थानां शक्तिऱ्हासं चातएव जनांश्चाश्रद्दधानान्-तात्पर्यशून्यान्निःसत्वान्निरुत्साहान्, दुष्टा मेधा येषां ते दुर्मेधास्तान् धारणाशक्तिशून्यान्वा । ' एध ' शद्बवदयमप्यकारांतः । ऱ्हसितायुषः-अल्पायुषः ॥ १६ ॥

हागू अदे कालदिंद (अथवा 'काल' शब्द वाच्यनाद परमात्मनिंद) माडलपट्ट पंचभूतगळ केलसगळू, शरीर मोदलाद पदार्थगळू, इवुगळ सामर्थ्यद क्षीणतेयन्नू आद्दरिंदले श्रद्धारहितराद, (आस्तिक्यबुद्धियिल्लद) अथवा निश्चयबुद्धिहीनराद, उत्साहविल्लद, दुष्टमेधावुळ्ळ अथवा धारणाशक्तियिल्लद, अल्पायुषिगळाद १६

**दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ॥ सर्ववर्णाश्रमाणां यद्दध्यौ ( हितं ) चिरममोघदृक् ॥१७॥**

दुष्टभाग्यान्वीक्ष्य मुनिर्मौनवान् दिव्येन चक्षुषा-अपरोक्षज्ञानेन सर्वाश्रमाणां यद्धितं तच्चिरं दध्यौ-चिंतितवानित्येकान्वयः । सर्वज्ञस्य चिरध्यानमज्ञदृष्ट्यपेक्षया दुष्टमोहनायचेति ज्ञातव्यं । अमोघदृक्-अवंध्यज्ञानः, अचिंत्यो वा ॥ १७ ॥

दुष्टभाग्यवुळ्ळ ( केट्ट केलसके उपयोगिसुव संपत्तियुळ्ळ ) जनरन्नु, मौनवन्नु धरिसिद आ वेदव्यासरु दिव्यदृष्टियिंद ( अपरोक्षज्ञानदिंद ) नोडि, एल्लवर्णाश्रमगळिगे यावदु हितवागुवदेंबदरबग्गे बहळ होत्तिन वरेगे विचारमाडिदरु. सर्वज्ञराद श्रीवेदव्यासरु बहुवेळेयवरेगे विचारमाडिदरेंबुवदु अज्ञदृष्टियिंद अथवा दुष्टजनर मोहनकागि एंदु तिळियतक्कदु. अमोघदृक्—व्यर्थवागदे यिद्द ज्ञानवुळ्ळवरु ॥ १७ ॥

**चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकं ॥ व्यदधाद्यज्ञसंतत्यै वेदमेकं चतुर्विधं ॥ १८ ॥**

( २ शरीरादिपदार्थानां । यादु. )

किं हितमपश्यदिति तत्राह चातुर्होत्रमिति । चत्वारो होतारो होत्राध्वर्यूद्गातृ-ब्रह्माणो यस्मिंस्तत्तथोक्तं । दशहोत्रादिचातुर्होत्रपर्यंतैर्मंत्रैः प्रकाश्यं वा अग्निष्टोमादिकं कर्म प्रजानां वैदिकीनां शुद्धं-शुद्धिकरं, रागादिप्रयुक्तिवर्जितं वा वीक्ष्य यज्ञसंतत्यै-अग्निष्टोमादियज्ञपरंपराप्रवर्तनाय एकमविभक्तं वेदं ऋगादिभेदेन चतुर्विधं व्यदधादित्येकान्वयः । आदि-मध्यावसानेषु हरिस्मृत्या तत्पूज्यत्वेन क्रियमाणं कर्म प्रजानां ज्ञानद्वारा शुद्धिकरमपश्यदिति भावः ॥ १८ ॥

हितकरवाद याव संगतियन्नु विचारमाडि नोडिदरेंदरे हेळुवरु-होतृ, उद्गातृ, अध्वर्यु, ब्रह्मन्, ई नाल्कु ऋत्विजरिंद माडलिक्के बरुव अथवा दशहोतृ मोदलु-माडि चातुर्होतृपर्यंतवाद ( **पृथिवी होता, द्यौरध्वर्युः** इवे मोदलाद ) मंत्रगळिंद प्रकाशमानवाद ( स्पष्ट तोरतक्क ) अर्थदंते माडल्पडुव अग्निष्टोम ( सोमयाग ) मोदलाद **वैदिकं कर्म** अंदरे वेददल्लि हेळिद कर्मसमूहवु वैदिकधर्मगळन्नु आचरिसुव प्रजगळिगे शुद्धिकरवादद्दु अथवा काम-क्रोधादिगळ व्यापारवर्जितवादद्देंदु नोडि, आ अग्निष्टोम मोदलाद यज्ञगळु परंपरा नडियुवदक्कागि विभागिसल्पडदिद्द ओंदे वेदवन्नु ऋग्वेद मोदलाद नाल्कु भागगळगि माडिदरु. प्रारंभदल्लियू, मध्यदल्लियू, अंत्यदल्लियू श्रीहरियन्नु स्मरगमाडि, अवने पूज्यनेंदु माडल्पडुव कर्मगळु ज्ञानद्वारदिंद प्रजेगळिगे शुद्धिकरवादवुगळेंदु आलोचिसिदरु.

यादुपत्य-एल्ल अंगगळिंद युक्तवाद मूल वेददल्लि हेळल्पट्ट अग्निष्टोम मोदलाद कर्मगळु प्रजगाळिगे माडलिक्के अशक्यवादंथवेंदु नोडि, आ यज्ञगळु परंपरा नडियुवदक्कागि मोदले नाल्कुभागगळागि माडल्पट्ट, ओंदे एंदु तिळियल्पट्ट वेदवन्नू हागू अदरल्लि हेळिद कर्मगळन्नू नाल्कु भागगळागि माडिदरु ( एल्ल प्राणिगळु एल्ल कर्मगळन्नु माडलिक्के अशक्तरेंदु वेदव्यासरु शाखागळल्लियू भागगळन्नु माडिदरु. ) ॥ १८ ॥

## ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार उध्दृताः ॥ इतिहास-पुराणं च पंचमो वेद उच्यते ॥ १९ ॥

कथं विभक्ता इति तत्राह ऋगिति । वेदव्यासेन मूलवेदसमुद्रात् ऋग्यजुःसामाथर्वाख्याश्चत्वारो वेदा उध्दृताः, नतु कृताः । तदर्थज्ञानाय कृतं इतिहास-पुराणं च वेदार्थावेदकत्वात्पंचमो वेद इत्युच्यते । 'पंचमोवेद' इत्युक्तेः । इतिहासादीनां शब्दतो रचनं, नत्वर्थतः, तस्य नित्यत्वादिति ज्ञातव्यं ॥ १९ ॥

हेगे भागगळन्नु माडिदरेंदरे हेळवरु–वेदव्यासरिंद मूलवेदवेंब समुद्रदोळगिंद ऋग्वेद, यजुर्वेद, सामवेद मत्तु अथर्वणवेद एंब नाल्कु वेदगळु मेले तेगेयल्पट्टवु आदरे माडल्पडलिल्ल. आ वेदगळ ज्ञानवागबेकेंदु माडल्पट्ट इतिहास-पुराणगळु आ वेदगळ ज्ञानवन्नु माडिकोंडुवदरिंद ऐदने वेदवेंदु करियल्पडुत्तवे. ( ऐदने वेदवेंदु वचनविरुवदरिंद ) इतिहास-पुराणगळु शब्ददिंद मात्र होसदागि रचिसल्पट्टिरुववु, आदरे अर्थदिंदल्ल; यार्केंदरे आ अर्थवु नित्यवाददेंदु तिळियतक्कद्दु ॥ १९ ॥

**तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः कविः ॥ वैशंपायन एवैको निष्णातो यजुषां ततः ॥ २० ॥**

तत्र तेषां वेदानां मध्ये ऋग्वेदप्रवर्तकः पैलोभूदिति प्रत्येकमन्वयः । जैमिनस्यापत्यं जैमिनिः । साम गायति-शिष्येषु गमयति-प्रवर्तयतीति वा सामगः । कविः-सूक्ष्मज्ञानी । ततो जैमिनेरनंतरं एकः प्रधानः वैशंपायन एव यजुर्वेदानां निष्णातः । प्रवर्तकतयेति शेषः । 'एव' शब्देन सूर्यादन्यः प्रतिषिध्यते, नतु सूर्यस्तथासति वक्ष्यमाणविरोधात् ॥ २० ॥

आ वेदगळल्लि ऋग्वेदवन्नु पैलनेंब ऋषियु ( प्रवर्तकनु अंदरे तानु वेदव्यासरिंद अध्ययनमाडि, तन्न शिष्यरिगे अध्ययन माडिसिदनु. ) प्रचुरमाडिदनु, सूक्ष्मज्ञानियाद जैमिनन मगनाद जैमिनियु सामवेदवन्नु तन्न शिष्यरिगे हेळिदनु अथवा प्रचुरमाडिदनु. आ जैमिनिय अनंतर वैशंपायनने यजुर्वेदके मुख्यवागि प्रवर्तकनादनु. 'एव' एंब शब्ददिंद सूर्यन होर्तु इतरर प्रतिषेधवु माडल्पडुत्तदे ( अंदरे यजुर्वेदवन्नु वैशंपायन मत्तु सूर्य ई इब्बरु अध्ययनमाडिदरु; हागू इब्बरू तम्म शिष्यरिगे हेळिदरु ) हीगे अन्नदिद्दरे द्वादशस्कंधद वचनके विरोधबरुवदु. ॥ २० ॥

**अथर्वांगिरसामासीत्सुमंतुर्वारुणो मुनिः ॥ इतिहास-पुराणानां पिता मे रोमहर्षणः ॥ २१ ॥**

वारुणो-वरुणपुत्रः सुमंतुर्नाम मुनिरथर्वांगिरसां-अथर्ववेदानां प्रवर्तक आसीत् । मे पिता रोमहर्षणः इतिहास-पुराणानां प्रवर्तकः ॥ २१ ॥

वरुणन मगनाद 'सुमंतु' एंब मुनियु अथर्वण वेदद प्रवर्तकनादनु. मत्तु नन्न तंदेयाद रोमहर्षणनु इतिहास-पुराणगळ प्रवर्तकनादनु. ॥ २१ ॥

**तएव ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ॥ शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोभवन् ॥ २२ ॥**

भगवदाज्ञाप्रवर्तकं चतुर्णां वेदानां शाखोपशाखाभेदेन ऋषिकृतविभागमाह तएवेति । तएव पैलादयः ऋषयः स्वं स्वं वेदमनेकधा व्यस्यन् व्यभजन्नित्यन्वयः । ते वेदाः शिष्य-प्रशिष्यादिभिः शाखिनः-तन्नामपूर्वशाखावंतोभवन्नित्यन्वयः ॥ २२ ॥

आ वेदव्यासर आज्ञानुसारवागि आ नाल्कू वेदगळु शाखोपशाखेगळागि ऋषिगळिंद भाग मारुपट्टवेंदु हेळुत्तारे—आ पैल मोदलाद ऋषिगळु तम्म तम्म वेदगळलि अनेक भागगळन्नु माडिदरु. आ वेदगळु 'शिष्यरिगू आ शिष्यरिंद तम्म शिष्यरिगू हेळल्पट्टंते आया हेसरुळ्ळ शाखेगळादवु ॥ २२ ॥

तएव वेदा दुर्मेधैर्धार्यंते पुरुषैर्यथा ॥ एवं व्यवस्यत् भगवान् व्यासः कृपणवत्सलः ॥ २३ ॥

व्यासनामनिर्वचनायाह तएवेति । दुर्मेधैः-अल्पप्रज्ञैः पुरुषैः तएव वेदा यथा धार्यंते पठिताः अवधृतार्थाः क्रियंते एवं तथा शिष्य-प्रशिष्यादिभिः शाखोपशाखाभेदेन व्यवस्यत्-चकार । तस्मात् व्यास इति । किमर्थमिति तत्राह, कृपणवत्सलः-दीनजनस्निग्धः ॥ २३ ॥

व्यासरेंब हेसरिन व्युत्पत्तियन्नु हेळुवरु-दीनजनरलि दयावंतनाद आ भगवंतनु अल्पबुद्धियुळ्ळ जनरु ई वेदगळन्नु पठनमाडि इवुगळ अर्थवन्नु तिळिदुकोळ्ळुवंते शिष्यरिंद, शिष्यर शिष्यरिंद शाखेगळागियू, उपशाखेगळागियू विभागगळन्नु माडिसिद्दरिंद अवरिगे वेदव्यासरेंदेन्नुवरु ॥ २३ ॥

स्त्री-शूद्र-द्विजबंधूनां त्रयी न श्रुतिगोचरा ॥ कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २४ ॥

एवं भगवद्भक्तानां त्रैवर्णिकानां वैदिककर्मानुष्ठानेन शुद्धांतःकरणानामधोक्षजोपासनाजनितज्ञानेन मुक्तिः स्यादिति व्यासेन स्थापितं तदनाधिकारिणां स्त्री-शूद्रादीनां हरिभजनं कुत्रोक्तोपायेनेत्याकांक्षायामाह स्त्रीशूद्रेति । वेदोक्तकर्माख्यश्रेयसि पुरुषार्थसाधने मूढानामतएवानाधिकारिणां स्त्री-शूद्र-द्विजाधमानां त्रयी-त्रयो वेदाः श्रोतुं नयोग्याः इति यस्मादत एवं मया करिष्यमाणभारतादिशास्त्रोक्तविधिना इह जने श्रेयोभवेदिति कृपया मुनिना सर्वज्ञेन व्यासेन भारताख्यानं कृतमित्यन्वयः ॥

ईप्रकारवागि भगवद्भक्तराद ब्राह्मणरिगू, क्षत्रियरिगू, वैश्यरिगू, वेदगळलि हेळिद कर्मगळन्नु आचरिसुवदरिंद अंतःकरणवु शुद्धवागि श्रीहरिय आराधनेयिंद हुट्टिद ज्ञानदिंद मुक्तियागुवदेंदु वेदव्यासरिंद स्थापितवायितु. आदरे ई वेदोक्त कर्मगळलि अधिकारविल्लद स्त्री-शूद्रादिगळिगे हरिभजनवु याव ग्रंथदलि हेळिद

साधनदिंदेंदु आक्षेपिसिदरे हेळुवरु–वेदोक्तकर्मगळिंद मोक्षसाधनक्के अज्ञराद्दरिंद अनधिकारिगळाद स्त्रीयरू, शूद्ररू मत्तु ब्राह्मणाधमरू ( ब्राह्मणकुलदल्लि हुट्टि वेदगळ अध्ययनवन्नू, वेदोक्तकर्मानुष्ठानगळन्नू माडदेइद्दवरु ब्राह्मणाधमरु ) इवरु मूरू वेदगळन्नु केळलिक्के योग्यरल्लेंदु तम्मिंद माडल्पट्ट भारत मोदलाद शास्त्रगळल्लि हेळिद विधानगळिंद ई जनरिगे मुक्तिसाधनवागबेकेंदु वेदव्यासरु कृपेयिंद भारतपुराणवन्नु माडिदरु.

अत्रैतत्प्रमेयमवगंतव्यं । स्त्री-शूद्रादिकृपया भगवता भारताख्यानस्य कृतत्वात्तेषामेव तत्राधिकारो नान्येषामिति शंका माभूत् 'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनात् ब्राह्मणादीनामपि वेदार्थपरिज्ञानाय भारताद्यभ्यासस्य आवश्यकत्वेनोक्तत्वादुभयत्राधिकारो युज्यते । तेषां स्त्री-शूद्रादीनां तु गत्यंतराभावात्तदुक्तानुष्ठानेन मुक्तिरिति भावः ॥ २४ ॥

इल्लि ई सिद्धांतवन्नु तिळकोळ्ळतक्कद्दु–स्त्रीशूद्रादिगळ मेले अंतःकरणमाडि वेदव्यासरु भारतपुराणवन्नु माडिद्दरिंद आ स्त्री-शूद्रादिगळे अदक्के अधिकारिगळु, एरडनेयवरु अल्लेंदु तिळकोळ्ळबारदु. याकेंदरे "इतिहास-पुराणगळिंद वेदगळ अर्थवन्नु माडिकोळ्ळबेकु" एंब वचनद प्रकार ब्राह्मणादिगळादरू वेदगळ अर्थवन्नु तिळकोळ्ळुवदकागि भारत मोदलाद पुराणगळ अभ्यासवन्नु अवश्यवागि माडलेबेकेंदु हेळल्पट्टद्दरिंद ब्राह्मण, क्षत्रिय मत्तु वैश्य ई मूवरिगे एरडरल्लियू अधिकारविरुवदु- आदरे आ स्त्री-शूद्रादिगळिगे एरडने मार्गविरदेइरुवदरिंद आ भारत मोदलाद पुराणगळल्लि हेळिद विधानदिंदले मुक्तियु ॥ २४ ॥

## एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ॥ सर्वात्मकेनापि यदा नातुष्यत् हृदयं ततः ॥ २५ ॥

केन हेतुना कुतः संचोदित इति प्रश्नं परिहरिष्यन् प्रायः कृतावतारकार्यस्य दुर्जनान् मोहयतो व्यासस्य लोकानुकरणप्रकारमाह एवमित्यादिना । हे द्विजाः, भूतानां सदा श्रेयसि-नित्यमुक्तिसाधने एवं प्रवृत्तस्यापि यदा हृदयं सर्वात्मकेन नातुष्यत् मे मनोवतारप्रयोजनेन सर्वप्रकारेणालमित्यलंबुद्धिं नापततस्तदा ॥ २५ ॥

यारिंद, हगू याव कारणदिंद, वेदव्यासरु भागवतवन्नु माडलिक्के प्रवृत्तरादरेंब प्रश्नद परिहारवन्नु माडुवदक्कागि अवतारद कार्यवन्नु प्रायः पूर्णमाडिद वेदव्यासरु दुष्टजनरन्नु मोहपडिसुवदक्कागि लोकरीतियन्ननुसरिसिद प्रकारवन्नु हेळुत्तारे–हे शौनकादिब्राह्मणरे, प्राणिगळिगे नित्यमुक्तिगे साधनवु दोरेयबेकेंदु ईप्रकारवागि प्रवृत्तरादाग्यू आ वेदव्यासरिगे यावागे अवतारमाडिद प्रयोजनद संबंधदिंद पूर्णवागि समाधानवागलिल्लवो अगे ॥ २५ ॥

**नातिप्रसन्नहृदयः सरस्वत्यास्तटे शुचौ ॥ वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २६ ॥**

धर्मज्ञानी नातिप्रसन्नहृदयः अवतारप्रयोजनानलंबुद्धिमान् सरस्वत्यास्तटे तत्रापि शुचौ देशे विविक्तस्थ-एकांते तिष्ठन् लोकदृष्ट्याऽनलंबुद्धि-कारणं किंचेति विविधं तर्कयन्-विचारयन्निदं वक्ष्यमाणमेवात्मानं प्रत्युवाचेत्यन्वयः ॥ २६ ॥

धर्मज्ञानिगळाद मत्तु अवतारमाडिद केलसवु पूर्णवागदिद्दरिंद पूर्ण समाधानहोंददिद्द आ वेदव्यासरु सरस्वतीनदिय दंडिय मेले अदरल्लियू शुचिर्भूतवाद स्थळदल्लि ओब्बरे कुळितु, समाधानवागदिरुव कारणवु एनिरुवदेंब विषयदल्लि लोकरीतियंते नानाप्रकारद तर्कगळन्नु माडुत्त 'इन्नु मुंदे हेळुवदन्नु' तमगे तावे अंदुकोंडरु ॥ २६ ॥

**धृतव्रतेन हि मया छंदांसि गुरवोऽग्नयः ॥ मानिता निर्व्यलीकेन गृहीतं चानुशासनं ॥ २७ ॥**

धृतव्रतेन लौकिकाचारापेक्षया वेदव्रतधारणवता मया निर्व्यलीकेन-निर्व्याजेन, चेतसेति शेषः, च्छंदांसि-वेदाः गुरवोध्यापकाः त्रेताग्नयः मानिताः सत्कृताः, अनुशासनमाज्ञा च गृहीता । 'हि' शब्देन विप्रादिभिर्वेदव्रतादिवैदिककर्मावश्यं कर्तव्यमिति दर्शयति ॥ २७ ॥

लौकिकाचारानुसारवागि वेदगळल्लि हेळिद व्रतगळन्नु आचरिसुत्त नन्निंद वेदगळू, गुरुगळू, मूरु अग्निगळू कपटरहितवाद मनःसिनिंद सन्मानमाडल्पट्टवु; हागू गुरुगळ अप्पणेयू पालिसल्पट्टितु. 'हि' शब्ददिंद वेददल्लि हेळिद व्रत मोदलाद कर्मगळन्नु ब्राह्मणरु अवश्यवागि माडबेकेंदु तोरिसिरुवरु ॥ २७ ॥

**भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः ॥ दृश्यते यत्र धर्मो हि स्त्री-शूद्रादिभिरप्युत ॥ २८ ॥**

यत्र भारते स्त्रीशूद्रादिभिरपि त्रैवर्णिकैरुतानुष्टेयो धर्मो दृश्यते, तस्य भारतस्य करणेनाम्नायार्थः वेदादिसंप्रदायार्थः प्रदर्शितो हि तत्र किंचिदुर्वरितं नास्तीत्यर्थः ॥ २८ ॥

याव भारतदल्लि स्त्री-शूद्रादिगळू ब्राह्मण-क्षत्रिय-वैश्यरू माडतक्क धर्मगळु तोरिसल्पट्टवेयो आ भारतवन्नु माडुवदरिंद वेद मोदलादवुगळ संप्रदायदिंद बंद अर्थवु तोरिसल्पट्टिरुवदु. अदरल्लि यावदू उळिदिरुवदिल्ल ॥ २८ ॥

अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ॥ असंपन्न इवाभाति ब्रह्मवर्चस्विसत्तमः ॥ २९ ॥

अथापि भारतकृत्या आम्नायार्थप्रदर्शनानंतरमपि दैह्यो-देहरूप आत्मा आत्मना स्वतएव विभुर्व्याप्तो मे-ममात्मावतारप्रयोजनासंपत्त्या असंपन्न-अप्राप्तप्रयोजनइवाभाति । कीदृशः ब्रह्मवर्चस्विसत्तमः-वृत्ताध्ययसंपन्नानां मध्ये श्रेष्ठ इत्यन्वयः । 'ब्रह्मवर्चस्यसत्तम' इति पाठेप्य यमेवार्थः ॥ २९ ॥

भारतवन्नु माडुवदरिंद वेदगळ अर्थवु तिळियुवंते माडिदाग्यू स्वतः एल्लकडेयल्लियू व्याप्तवाद, आचाराध्ययनगळिंद संपन्नरादवरल्लि श्रेष्ठवाद तन्न देहरूपवाद आत्मा अवतारमाडिद केलसवन्नु पूर्णवागि नेरवेरिसदिद्दंते तोरुवदु. 'ब्रह्मवर्चस्यसत्तमः' एंदु पाठविद्दरू इदे अर्थवु ॥ २९ ॥

किं वा भागवता धर्मा न प्रायेण निरूपिताः ॥ प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३० ॥

प्राय इदमेवानलं बुद्धौ कारणमाह किंवेति । भागवता धर्माः प्रायेण ननिरूपिताः, किंच भारते निरूपिता अपि पुनः शास्त्रान्तरेण निरूपणीया इत्यतः प्रायेणेत्युक्तं । किंविशिष्टाः परमहंसानां प्रियाः ततः किं ते परमहंसाएवाच्युतप्रिया हि यस्मात्तस्मादसंपन्नइवाभातीति भावः ॥ ३० ॥

पूर्णवागि समाधानवागदिरुवदक्के बहुशः इदे कारणवेंदु हेळुवरु–श्रीहरिगे प्रीत्यास्पदराद परमहंसरिगे प्रियवाद भागवतधर्मगळु प्रायशः नन्निंद हेळल्पट्टिल्ल. इदे ननगे समाधानवागदिरुव कारणवु. भारतदल्लि आ धर्मगळु हेळल्पट्टाग्यू एरडने शास्त्रदिंद अवु ( स्पष्टवागि ) निरूपिसल्पडतक्कद्दु एंदु 'प्रायेण' एंत अंदिरुवरु ॥ ३० ॥

तस्यैवं खिन्नमात्मानं मन्यमानस्य खिद्यतः ॥ कृष्णस्य नारदोभ्यागादाश्रमं प्रागुदाहृतं ॥ ३१ ॥

'केनचित्प्रेरितएव महापुरुषः स्वकार्ये प्रवर्तत' इति न्यायात् भागवतकृतिरेवालंबुद्धिहेतुरिति निश्चयवानपि नारदप्रेरितः भागवतमकार्षीदिति

१ ( परमात्मन आत्मकू देहकू एनू भेदविल्ल )

नारदस्य लोके महती कीर्तिः स्यादिति भक्तवत्सलत्वान्नारदागमनकांक्षमाणं व्यासंप्रति तदागमनमाह तस्येति । खिन्नं-अनलंबुद्धिमासं, अतः खिद्यतः खिद्यमानस्य-अनलंबुद्धिंगतस्य ॥ ३१ ॥

दोड्ड जनरु एरडनेयवरिंद प्रेरितरागिये तम्म कार्यदल्लि प्रवृत्तरागुत्तारॆंब न्यायानुसारवागि भागवतवन्नु माडोणवे समाधानवागुवदक्के कारणवॆंदु निश्चयवागि तिळिदाग्यू नारदरिंद प्रेरितरागि वेदव्यासरु भागवतवन्नु माडिदरॆंदु नारदर कीर्तियु लोकदल्लि बहळागबेकॆंदु आ नारदर आगमनवन्नु अपेक्षिसुव व्यासरन्नु कुरितु नारदरु बंदरॆंदु हेळुवरु-ईप्रकारवागि तमगे समाधानवागिल्लवॆंदु तिळकॊंड्ड समाधानवन्नु होंददे इद्द आ वेदव्यासर ' हिंदे हेळिद ' आश्रमक्के नारदरु बंदरु ॥ ३१ ॥

## तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिं ॥ पूजयामास विधिवन्नारदं सुरपूजितं ॥ ३२ ॥

## इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे चतुर्थोध्यायः ॥ ४ ॥

अभिज्ञाय संज्ञापूर्वकं विज्ञाय, सहसा-कालक्षेपमंतरेण सरस्वतीतीरवर्ति स्वाश्रमस्थितो भागवतधर्मज्ञापनहेतोर्नारदेन चोदितः श्रीकृष्णो भार्गवं - तसंहितामकरोदिति शौनकप्रश्नपरिहारः ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे पदरत्नावल्यां टीकायां चतुर्थोध्याय ः ॥ ४ ॥

देवतिगळिंद पूजितराद ( अल्लि बंदिरुव ) आ नारदमुनिगळन्नु गुर्तु हिडिदु, वेदव्यासरु अदे क्षणवे एद्दुनिंतु, अवर सत्कारवन्नुमाडि, विधानपूर्वकवागि अवर पूजेयन्नु माडिदरु. सरस्वतीतीरदल्लिद्द तम्म आश्रमदल्लि वेदव्यासरु ' धर्मगळन्नु तिळिसिकोडबेकॆंदु ' नारदरिंद प्रेरितरागि भागवतसंहितेयन्नु माडिदरॆंदु शौनकादिब्राह्मणर प्रश्नक्के उत्तरवु ॥ ३२ ॥

हींगे श्रीमद्भागवतवॆंब महापुराणदल्लि प्रथम स्कंधदल्लि मूल मत्तु टीकेगळिगनुसारवागि अलंकरिसिरुवंथ ' सुखार्थबोधिनि ' ऎंब कन्नड टीकेयल्लि नाल्कने अध्यायवु मुगिदितु ॥ ४ ॥

**सूत उवाच—अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ॥ देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥**

अथार्घ्यपाद्यादिसमर्हणानंतरं सुखमुपविष्टो विस्तृतकीर्तिः वीणा महतीनाम पाणौ यस्य स तथोक्तः । मंदस्मितं कुर्वन्निव प्रसन्नवदनो देवर्षिः समीप उपविष्टं तं विप्रर्षिं व्यासं प्राहेत्येकान्वयः ॥ १ ॥

सूतनु अर्घ्य–अर्घ्य, पाद्य मुंताद पूजानंतरदल्लि सुखदिंद कुळित, बहु कीर्तिमंतनाद, 'महती' एंब हेसरुळ्ळ वीणेयन्नु कैयल्लि हिडिद, मुगुळु नगेयिंद नगुववनंते प्रसन्नमुखनाद, देवर्षियाद नारदनु समीपदल्लि कुळितिद्द विप्रर्षियाद वेदव्यासरन्नु करितु हींगे मातुगळन्नाडिदनु ॥ १ ॥

**नारद उवाच—पाराशर्य महाभाग भवतः कच्चिदात्मना ॥ परितुष्यति शारीर आत्मा मानसएव वा ॥ २ ॥**

विज्ञातभगवदभिप्रायः तदनुकरणानुगुणकरणवान्नारदो नित्यकुशलं तस्य संजानन्नापि तदनुवदन्निव कुशलं पृच्छतीत्याह पाराशर्येति । महाभाग-ऐश्वर्याद्यनंतभाग्यनिधे, पाराशर्य-पराशरपुत्र, भगवतः शारीरः मानसो शरीररूपो मनोरूपो वा भेदाभावादेव मुक्तिः । आत्मा अवतारप्रयोजनं कृत्वात्मना स्वतएव परितुष्यति कच्चित्स्वतंत्रतया कृतावतारकार्यत्वात्परितुष्यतीत्येवकारार्थः ॥ २ ॥

आ वेदव्यासर अभिप्रायवन्नु बल्लवनाद हागू अवर अभिप्रायवन्ननुसरिसिये आडितोरिसुवदक्के अनुकूलवाद वागादि इंद्रियगळुळ्ळ नारदनु आ वेदव्यासर नित्यक्षेमवन्नु बल्लवनादाग्यू अदन्ने अनुवाद (मोदलु सिद्धवादद्दन्ने हेळोण) माडुववनंते अवर क्षेमवन्नु केळुत्तानेंदु सूतनु हेळुवनु–ऐश्वर्य मोदलाद अनेक भाग्यगळिंद पूर्णराद पराशरर पुत्ररे, तम्म शरीररूपवाद अथवा मनोरूपवाद आत्मा अवतारमाडिद केलसवन्नु मुगिसि समाधानवन्नु होंदिरुवदष्टे? स्वतंत्रवागि अवतारमाडिद केलसवन्नु माडिद्दरिंद तम्म आत्मा समाधानवन्नु होंदिरुवदेंब अर्थवन्नु 'एव' एंब पदवु तोरिसुत्तदे ॥ २ ॥

**जिज्ञासितं सुसंपन्नमपि ते महदद्भुतं ॥ कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितं ॥ ३ ॥**

कुत इति तत्राह जिज्ञासितमित्यादि । यस्त्वं धर्मादिसर्वपुरुषार्थबृंहितं-पूर्णं भारतं कृतवांस्ते त्वया सुसंपन्नं-सुखपूर्णमद्भुतं सर्वस्मादाश्चर्यतमं अत्ता रुद्रो यस्माद्भवति तदद्भुतं वा, महद्देशतः कालतो गुणतश्चापरिच्छिन्नं ब्रह्म जिज्ञासितं-विचारितं । 'अपिच' शब्दो वक्ष्यमाणद्युवर्ये ।

१ 'भावनाच्चैव सुत्वाच सोयं पुरुष इत्यपि' ॥ इत्यनुव्याख्यानव्याख्यावसरे । सुधायां 'सुत्वात्-सुखत्वात्' इति 'सु' शब्दस्य सुखवाचकत्वोक्तेः ।
२ परमात्मन शरीरक्कू, मनःसिगू, आत्मक्कू भेदविल्लदद्दरिंदले हींगे अंदिरुवरु.

शब्दतोऽर्थतोऽपि महत् । अद्भुतं-गहनं । ' व्यवहारे धने शास्त्रे वस्तु-हेतु-निवृत्तिषु ' इति वचनात्तन्यायेनार्थशब्दस्य द्विरावृत्त्या सर्वशास्त्रार्थपरिबृंहितं कृतवानिति यस्मात्तस्मात्तेन लोकानां ज्ञातुमिष्टं सुष्टु सुपूर्णमभूदिति वा ॥ ३ ॥

वेदव्यासर मनःसु याके समाधानवन्नु होंदिरुवदेंबदके कारणवन्नु हेळुवरु—याव तम्मिंद धर्म मोदलाद एल्ल पुराणार्थगळिंद पूर्णवाद भारतवु माडल्पट्टितो, आ तम्मिंद सुखपूर्णवाद, एल्ल वस्तुगळ कितल्ल अतिशय आश्चर्यकरवाद अथवा ई जगत्तन्नु नुंगुव रुद्रनन्नु हुट्टिसिद, दशर्दिदल्ल, कालदिंदल्ल मत्तु गुणगळिंदल्ल अळतेयन्नु माडुवदके बारद ब्रह्मवु विचारिसल्पट्टितु; ( ई श्लोकदल्लिय ' अपि ' एंब शब्दवु मुंदे हेळुव अर्थवन्नादरु तोरिसुत्तदे. ) शब्दगळिंदल्ल मत्तु अर्थगळिंदल्ल श्रेष्ठवाद, गंभीर ( अतिशय कठिणवाद ) अर्थगळुळ्ळ, एल्ल शास्त्रार्थगळिंद पूर्णवाद श्रीमन्महाभारतवन्नु तावु माडिद्दरिंदले जनंगळिगे बेकादष्टु तिळकोळ्ळुवदके साकु. ' अर्थ ' शब्दके—व्यवहार, धन, शास्त्र, वस्तु, हेतु मत्तु निवृत्ति इष्टु अर्थगळु इरुवदरिंद हागु ' अर्थ ' शब्दवन्नु एरडावर्ति योजने माडुवदरिंद, ' सर्वार्थ ' अंदरे सर्वशास्त्रार्थ एंदु अर्थवन्नु माडिरुवरु ॥ ३ ॥

## जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनं ॥ तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥

किंच यच्चोपाध्यायपरंपरया भवताधीतं सनातनं नित्यं वेदात्मकं शब्दब्रह्म तदपि जिज्ञासितं-विचारितं, तस्मात्कृतावतारकार्योऽसि, ततएव नातुष्टिकारणं पश्यामीत्यर्थः । तथाप्येवमपि-कृतावतारकार्योऽपि अकृतावतारप्रयोजनइवात्मानं शोचसि-प्रकाशयसि हेप्रभो-प्रभूतज्ञानेत्यन्वयः ॥ ४ ॥

हागू गुरुगळ परंपरादिंद बंद याव वेदवेंब शब्दब्रह्मवन्नु तावु अध्ययनमाडिदिरो आ शब्दब्रह्म ( वेद ) वन्नादरु विचारमाडिरुविरि. आद्दरिंद तावु अवतार माडिद प्रयोजनवु पूर्णवायितु. इन्नु तमगे समाधानवागदे इरुव कारणवु एनू तोरुवदिल्ल. हीगिद्दाग्यू बहुज्ञानवुळ्ळ ( ज्ञानसमुद्रराद ) व्यासरे, तावु अवतार माडिद प्रयोजनवु पूर्णवादाग्यू आगदवरंते तोरुविरि ॥ ४ ॥

## व्यास उवाच—अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे ॥ तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वात्मभवात्मभूतं ॥ ५ ॥

एवं नारदेन पृष्टोपरिमितज्ञानस्वरूपोपि अज्ञवत् दुष्टजनमोहनाय तत्कारणं तमेव पृच्छतीत्याह अस्त्येवेति । हेनारद, त्वयोक्तमिदं सर्वं मे अस्त्येव, नकिंचिदवशिष्टमस्ति, तथापि मे आत्मा-मनः नपरितुष्यते-नालंबुद्धिं प्राप्नोति । तुष्यतीति वक्तव्ये ' तुष्यत ' इति प्रयोगात् अज्ञजन-मोहनार्थमेव हरिणा प्रश्नः क्रियते नाज्ञानादिति महान्विशेषो विज्ञायते । आत्मनो-विष्णोर्भवतीत्यात्मभवो-ब्रह्मा तस्यात्मनः-शरीराभ्दूत-उत्पन्न आत्मभवात्मभूतः-ब्रह्मपुत्र इत्यर्थः । आत्मनि भवतीति वा । त्वा त्वामव्यक्तं-सूक्ष्मं तस्यापरितोषस्य मूलं कारणं पृच्छामहे । अल्पज्ञश्चेत्प्रश्नोत्तरं कथं ब्रूयादिति तत्राह अगाधेति । अपरिमितज्ञानं प्रश्नोत्तरवचनसमर्थमित्यर्थः । अत्रापि समित्युपसर्गमंतरेण पृच्छतेरात्मनेपदप्रयोगेण नारदस्य ज्ञानं चुलिकाजलपरिमितं, व्यासज्ञानं प्रलयसमुद्रवदपरिमितमिति तात्पर्यं शब्दज्ञैरेव ज्ञायते । आत्मभुवात्मभूतमिति केचित्पठंति तत्रोवङ्गादेशः श्छांदसः ५

ईप्रकारवागि नारदनिंद प्रश्नमाडिसिकोंडल्पट्ट वेदव्यासरु, तावु स्वतः अळत्तेइल्लद ज्ञानस्वरूपवुळ्ळवरादाग्यू अज्ञजनर मोहनार्थवागि आ नारदनन्ने अदर कारणवन्नु केळुत्तारेंदु हेळुवरु—व्यासरु अंदद्दु एलै नारदने, नीनु हेळिदंतेये एल्लवू इरुवदु, अदरल्लि यावदू उळिदिल्ल, आदाग्यू नन्न मनःसु पूर्णवागि समाधानवन्नु होंदिल्ल. ब्रह्मपुत्रनाद अगाधज्ञानवुळ्ळ निन्नन्ने समाधानवागदिरुव सूक्ष्मवाद आ कारणवन्नु केळुत्तेवे.

' तुष्यति एंब परस्मैपद प्रयोगवन्नु माडदे ' तुष्यते ' एंब आत्मनेपद प्रयोगवन्नु माडिद्दरिंद वेदव्यासरु ई प्रश्नवन्नु अज्ञजनर मोहनार्थवागिये माडिरुवरेहोर्तु तमगे तिळियदेंदु माडलिल्ल एंब महत्तवाद अर्थवन्नु तोरिसुवदु.—इन्नु आत्मभवात्मभूतं । " आत्मनः " विष्णुविनिंद, ' भवः ' हुट्टिदवनु, आत्मभवः ब्रह्मनु; आ ब्रह्मन ' आत्मनः ' शरिरादिंद, ' भूतः ' हुट्टिदवनु अंदरे ब्रह्मन मगनु. ' अगाधबोध ' ई पदवन्नु उपयोगिसिद कारणवन्नु हेळुवरु—स्वल्पबुद्धियुळ्ळवनु वेदव्यासर प्रश्नक्के उत्तरवन्नु हेळलारनेंदु आ नारदनिगे ' अगाधबोध ' एंदंदिरुवरु. बहळ ज्ञानउळ्ळवनाद्दरिंदले आ प्रश्नद उत्तरवन्नु हेळुवदक्के समर्थनु. पृच्छामहे । ' सम् ' उपसर्गविल्लदे ' पृच्छ ' धातुविन आत्मनेपदप्रयोगवन्नु उपयोगिसिद्दरिंद, नारदन ज्ञानवु बोगसियल्लिद्द नीरिनंते स्वल्पु परिमितियुळ्ळद्दु, आदरे आ वेदव्यासर ज्ञानवु प्रलयकालद समुद्रद नीरिनंते अपारवादद्देंदु शब्दज्ञानवुळ्ळवरु तिळकोळ्ळुवरु. ' आत्मभुवात्मभूतं ' एंदु पाठविद्दरे उवादेशवु छांदसप्रयोगवेंदु तिळियतक्कद्दु ॥ ५ ॥

**स वै भवान् देव समस्तगुह्यमुपासितो यः पुरुषः पुराणः ॥ परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसंगः ॥ ६ ॥**

नारदस्य स्वात्मानलंबुद्धिहेतुवेदनकारणं वक्तीत्याह, स वा इति । यो गुणैर्विरचितशरीरगतसुख-दुःखफलसंगरहितो विश्वं मनसैव स्वतंत्र-साधनांतरनिरपेक्षतया सृजत्यवति-संहरति स परावरेशो मुक्तामुक्तप्रपंचयोरीश इति परावरेशः । जगदुत्पत्तेः पुराप्यस्तीति पुराणः । पुरमणतीति वा । पुरूणि-कर्मफलानि सनोति-ददातीति पुरुषः उपासित इति अतः भवान् समस्तगुह्यं वेदेत्येकान्वयः । एतदुक्तंभवति । चतुर्मुखप्रियपुत्र-त्वात्तवैव सर्वजगत्सृष्ट्यादिकर्तृभगवदुपासकत्वेन सर्वज्ञत्वात्तत्प्रसादादस्मदनलंबुद्धिहेतुवेदनमस्तीति ॥ ६ ॥

तमगे समाधानवागदे इरुव कारणवु नारदनिगे ह्यागे गोत्तिरुवदेंबदन्नु हेळुत्तारे—यावनु सात्विक, राजस मत्तु तामस एंब मूरु गुणगळिंद रचितवाद, शरीरगळल्लि आगुव सुख-दुःखगळेंब फलगळ संगरहितनागि, तन्न होर्तु एरडने साधनगळ अपेक्षेयिल्लदे ई जगत्तन्नु हुट्टिसुवनु, पालनमाडुवनु हागु नाशमाडुव,नु प्रपंचदिंद मुक्तरादवरिगू, मुक्तरागदवरिगू स्वामियाद, जगत्तिन उत्पत्तिय पूर्वदल्लियू इद्द अथवा शरीरद यावत्तू ज्ञानवुळ्ळ, जीवरिगे अवरवर कर्मफलवन्नु कोडुव आ श्रीहरियु निन्निंद पूजिसल्पट्टिरुवनु. आद्दरिंद एल्ल गुह्यवू निनगे गोत्तिरुवदु–( तात्पर्यवेनेंदरे ) चतुर्मुखब्रह्मन प्रियपुत्रनाद्दरिंदल्ल, समस्त लोकगळ सृष्टि-स्थिति-लयवन्नु माडुव श्रीहरिय उपासनेयन्नु माडि सर्वज्ञनाद्दरिंदल्ल, आ श्रीहरिय अनुग्रहादिंदल्ल, नमगे समाधानवागदे इरुव कारणवन्नु नीनु बल्लि ॥ ६ ॥

**त्वं पर्यटन्नर्क इव त्रिलोकीमंतश्चरो वायुरिवात्मसाक्षी ॥ परावरे ब्रह्मणि धर्मतो व्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७ ॥**

तव भगवत्प्रसादेन जनितापरोक्षज्ञानेन सर्वत्राव्याहतगतिकर्मणा च योगप्रभावेन सर्वप्राणिशरीरांतश्चरणेन चानलंबुद्धिहेतुवित्त्वमित्याह त्वमिति । त्रिलोकीं पर्यटन् अर्कइव त्रिलोक्यां अव्याहतगतिः सर्वप्राण्यंतश्चरो वायुरिवात्मसाक्षी-सर्वजीवबुद्धिवर्तिवृत्तज्ञः त्वं परे ब्रह्मणि तथा अवरे तत्प्रति-पादकवेदाख्यशब्दब्रह्मणि धर्मतो वेदोक्तभगवद्धर्मानुष्ठानेन तदधिकारोपपादकवेदव्रतादिभिश्चानुष्ठापितैः लोकमोहाय च मयानुष्ठितैः स्नातस्य कृत-कृत्यस्य मे अवतारप्रजोजनं न्यूनं नितरामुर्वरितं अलं यथा भवति तथा विचक्ष्व-विशिष्टतया ब्रूहीत्येकान्वयः ॥ ७ ॥

श्रीहरिय अनुग्रहदिंद हुट्टिद अपरोक्षज्ञानदिंदल्ल, एल्लकडेयल्लियू प्रतिबंधकविल्लदे संचार माडुवदरिंदल्ल, योगसामर्थ्यदिंद एल्ल प्राणिगळ शरीरगळल्लि संचरिसुवदरिंदल्ल, नमगे समाधानवागदिरुव कारणवन्नु नीनु बल्लिएंदु हेळुवरु–त्रिलोकदल्लि संचारमाडुव सूर्यनंते मूरू लोकगळल्लियू प्रतिबंधकविल्लद संचारवुळ्ळवनू

सर्व प्राणिगळल्लि संचारिसुव वायुविनंते एल्ल प्राणिगळ मनस्सिनल्लिद्दद्दन्नेल्ल बल्ल नीनु, परमात्मन संबंध दिंदल्ल हागू आ परमात्मनन्नु प्रतिपादनमाडुव वेदद संबंधदिंदल्ल वेदगळल्लि हेळल्पट्ट भगवद्धर्मगळन्नु आचरिसुव अधिकारवन्नु कोडुव नन्निंद आचरिसल्पट्ट स्वाध्याय नियमगळिंदल्ल कृतकृत्यनाद नन्न अवतारद प्रयोजनदल्लिय न्यूनतेयन्नु चन्नागि विचारिसि एनू उळिसदंते हेळु ॥ ७ ॥

## नारद उवाच–भवतानुदितप्रायं यशो भगवतोऽमलं ॥ येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलं ॥ ८ ॥

नारदोपि सर्वज्ञस्य व्यासस्य हृदि स्थिताभिप्रायं विद्वान् तत्प्रसादमादित्सुरूनावतारप्रयोजनं वक्तीत्याह भवतेति । हेव्यास, भवता भगवतो हरेरमलं यशोऽनुदितप्रायं-बहुत्वेन नप्रतिपादितं, येनानुदितेन यशः प्रतिपादकशास्त्रेणासौ भवत आत्मा नैव तुष्येत । अहं तस्य यशसःप्रतिपादकं शास्त्रं खिलमुर्वरितं मन्य इत्यन्वयः ॥ ८ ॥

नारदनादरू सर्वज्ञराद वेदव्यासर मनःसिनल्लिय अभिप्रायवन्नु तिळिदवनाद्दरिंद अवर अनुग्रहवन्नु संपादिसुवदक्कागि अवरु अवतारमाडिद केलसगळल्लि उळिदद्दन्नु हेळुत्तानेंदु हेळुवरु–( नारदनु अंदद्दु ) हे व्यासरे, तम्मिंद परमात्मन निर्मलवाद यशःसु बहळागि प्रतिपादनमाडल्पट्टिल्ल मत्तू आ परमात्मन यशःसन्नु प्रतिपादन माडुव ( होगळुव ) शास्त्रवन्नु माडदेइद्ददरिंदले तम्म ई आत्मवु, समाधानवन्नु होंदिल्ल. परमात्मन यशःसन्नु प्रतिपादन माडुव शास्त्रविरदेइरुवदे अवतार प्रयोजनदल्लि न्यूनतेयु एंदु तिळियुत्तेने ॥ ८ ॥

## यथा धर्मादयो ह्यर्था मुनिवर्यानुकीर्तिताः ॥ न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥

भारतादिशास्त्रेषु हरियशसो बहूदितत्वात् कथं खिलं मन्य इत्युच्यत इति तत्राह यथेति । हेमुनिवर्य-सर्वज्ञतम, मुनिभिः व्रियत इति वा, मुनिवरप्राप्य इति वा, मुनिवर्य, धर्मादयः पुरुषार्थाः यथानुवर्णितास्तथा वासुदेवस्य महिमा नानुवर्णितो हि यस्मात्तस्मादनुवर्णनीयः । धर्मादीनामल्पकथनेनापि पूर्तिः स्यात्, न तथा वासुदेवस्य महिम्नो भारतादावतिकथितस्यापि सतां तत्र तात्पर्यातिशयात्फलाधिक्याच्च । नहि सूर्योदयमाकांक्षमाणस्य खद्योतादयेनेच्छा निवर्तेत इत्येतदर्थं ' हि ' शब्देनाह । द्वितीयो ' हि ' शब्दो हेत्वर्थः ॥ ९ ॥

भारत मोदलाद शास्त्रगळल्लि परमात्मन यशःसन्नु बहळ हेळिदाग्यू इन्नू न्यूनतेयागिरुवदेंबदु ह्यागे एंदरे हेळुवरु–सर्वज्ञरल्लि श्रेष्ठराद, मुनिगळिंद अपेक्षिसल्पड्डुव वेदव्यासरे, भारत मोदलादवुगळल्लि धर्म मोदलाद पुरुषार्थगळु ह्यागे ( सुलभवागि तिळियुवंते ) वर्णिसल्पट्टवेयो हागे परमात्मन महिमेयु ( सुलभदिंद तिळियुवंते वर्णिसल्पट्टिल्ल. आद्दरिंद परमात्मन महिमेयन्नु वर्णिसतक्कद्दु. धर्म मोदलादवुगळन्नु स्वल्पु हेळिदाग्यू साकागुवदु, श्रीहरिय माहात्म्यवन्नु भारय मोदलादवुगळल्लि, आ धर्मादिगळकिंतल्ल हेच्चागि हेळिदाग्यू अवन महिमेयल्लि विशेष अभिरुचि इरुवदरिंदल्ल, अदर फलवादरू विशेषवागिरुवदरिंदल्ल सज्जनरिगे ईग्ये तावु हेळिदद्दरिंदले साकागुवदिल्ल. ह्यागेंदरे सूर्योदयद मार्गवन्नु निरीक्षणे माडतक्कवरिगे होत्तिहुळद दर्शनदिंद अवर अपेक्षेयु हेगे पूर्णवागुवदिल्लवो हागे यंब अर्थवन्नु 'हि' एंब पदवु हेळुवदु. एरडने 'हि' शब्दवु हेतुवन्नु तोरिसुवदु ॥ ९ ॥

**न तद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं न गृणीत कर्हिचित् ॥ तद्वायसं तीर्थमुशंति मानसा न यत्र हंसा न्यपतन्निमंक्षया ॥ १० ॥**

धर्मादीनां अल्पकथनेन कथं पूर्तिःस्यादिति तत्राह नेति । यद्वचो जगत्पावनकरं हरेर्यशो न गृणीत कर्हिचिदपि नप्रतिपादयेचित्रपदमपि-चित्राणि पदानि यस्मिंस्तत्तथोक्तं । तत् वचो न, वक्ति-प्रतिपादयतीति वचः, शास्त्रं तन्नभवतीत्यर्थः । कुतः- तद्वायस-वयोमात्रानुजीवितार्थं शास्त्रं[1] उशंति-इच्छंति । यत्र काकोच्छिष्टतीर्थे मानसाः प्रेक्षावंतः मानसाख्यसरोविहारिणो वा हंसाः परमहंसाः धवलपक्षा वा जल-पयोविवेककारिणः मिमंक्षया-विचारलक्षणस्नानेच्छया न न्यपतन्-न निपतंति नप्रविशंतीति यथा तथा यत्र-यस्मिन् तीर्थे मानसाः-ब्रह्मणो मनसो जाताः सनकादयः हंसाः, निर्लेपा इति वा । तस्मात् सज्जनानादरणीयत्वेन धर्मादीनामल्पकथनेन पूर्तिरिति भावः । विरमंत्युशिक्क्षया, उशिक्-शुद्धं, क्षयं-स्थानं येषां ते तथोक्ताः । शुद्धं-ब्रह्म तदेव क्षयो येषां ते तथोक्ता इतिवेति पठित्वा केचिद्व्याचक्षते तच्चिंत्यं ॥ १० ॥

धर्म मोदलादवुगळन्नु स्वल्पु हेळुवदरिंद ह्यागे समाधानवागुवदेंबदन्नु हेळुत्तारे–याव वाक्यगळुळ्ळ निबंधवु, जगत्तन्नु पवित्रमाडुव श्रीहरिय यशःसन्नु स्वल्पादरू प्रतिपादन माडुवदिल्लवो, आ निबंधवु प्रास, अलंकार मोदलादवुगळिंद युक्तवाद पदगळुळ्ळद्दादाग्यू शास्त्रवेंदेनिसुवदिल्ल. यार्केंदरे इंथवुगळिगे ई लोकदल्लि जीविसु-

१. अत्र 'वयः' शब्देन जीवनमुपलक्ष्यते । 'मात्र' शब्देन परलोकं वारयति । जीवनमात्रोपायभूतमित्यर्थः ॥ (यादुपत्य)

वदके ( होतु कळेयुवदके ) मात्र साधनगळुळ्ळ शास्त्रवेंदेनुवरु. ह्यागेंदरे, कागेगळु मुळगतक्क सरोवरदलि नीरन्नू मत्तु हालन्नू मिश्रमाडिद्दरे बेरे बेरे माडतक्क सामर्थ्य-वुळ्ळ, शुभ्रवाद रेक्केगळुळ्ळ हंसपक्षिगळु तापवन्नु शांतिमाडिकोळ्ळुवदके स्नानमाडलिच्छिसदेइद्दरिंद आ सरोवरवु विचित्रसोपानगळिंद एष्टु रमणीयविद्दाग्यू लोकदलि ह्यागे निंद्यवो आ प्रकारवागिये प्रास-अलंकारगळिंद विचित्रपदगळुळ्ळद्दादाग्यू याव ग्रंथवन्नु सकलसंगपरित्यागमाडिद शुद्ध स्वभावराद सनकादिगळे मोदलाद परम-हंसरु श्रीहरिय तत्ववन्नु विचारिसुवदक्कागि उपयोगिसुवदिल्लवो आ ग्रंथवु आयुष्य इरुववरेगू उपजीवनमार्गके उपयोगवे होर्तु मोक्षके अल्ल. आद्दरिंद मोक्षके उपयोगवागदेइद्द धर्मादिगळन्नु एष्टु स्वल्पु हेळिदाग्यू साकागुवदु. विरमंत्युशिक्क्षयाः ( शुद्धवाद स्थानवुळ्ळवरु ) एंब पाठवन्नु केलवरु ( परकीयरु ) हेळुवदु ( पुरातन पुस्तकदल्लिल्लदरिंद ) अयुक्तवु ॥ १० ॥

## स वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ॥ नामान्यनंतस्य यशोंकितानि यच्छृण्वंति गायंति गृणंति साधवः ॥ ११ ॥

वासुदेवमहिम्नोपि कथितस्यापि कथं नपूर्तिरिति तत्राह स वागिति । यस्मिन्निबंधे प्रतिश्लोकमपशब्दाद्यबद्धवत्यपि शाब्दिकैर्जुगुप्सिते देश-काल-गुणैरनंतस्य हरेः पारिजातस्य हरणाद्यात्मकयशोलांछितानि नारायणादिनामानि संति । साधवः परमभागवताः-शुकादयो यत्-यंच सति वक्तरि शृण्वंति, अन्यदा स्वयमेव गायंति, श्रोतरि सति गृणंति । स जनतायाः जनसमूहस्याघं-पापं विप्लावयति-नाशयतीति जनताघविप्लवः, वाचां-विसर्गः विशिष्टरचनाविशेष इत्येकान्वयः । यस्मिन् संति प्रशस्तानि ह्यनंतस्य नामानि साधवः शृण्वंतीति यत् यस्मात्तस्मात्सएव वाग्विसर्ग इति वा । जनतापापविनाशहेतुत्वात् सज्जनगृहीतत्वाच्च वासुदेवमाहात्म्यप्रतिपादकमेव शास्त्रं नान्यदतस्तदेव शास्त्रप्रणेतृभी रचनीयमिति भावः ॥११॥

श्रीहरिय महिमेयन्नु बहळ हेळिदाग्यू पूर्तियु याके आगुवदिल्लेंबदन्नु हेळुवरु–याव. ग्रंथवु प्रतियोंदु श्लोकदलि अपशब्दादिगळुळ्ळद्दागि सरियागि रचिसल्पडदे इरुवदरिंद वैय्याकरणरिंद निंद्यवादाग्यू, देशदिंदलू, कालदिंदलू, गुणगळिंदलू अनंतनाद श्रीहरिय, पारिजातहरण मोदलाद यशःसिनिंद चिन्हितवाद नारायण मोदलाद हेसरुगळुळ्ळद्दो आ ग्रंथवन्नु परम भागवतराद शुकाचार्यरे मोदलादवरु हेळतक्कवरु इद्दरे तावु केळुवरु, इल्लदिद्दरे तावु गायनमाडुवरु मत्तु केळुववरिगे हेळुवरु. इंथ ग्रंथवे जनगळ पापवन्नु नाशमाडुवदरिंद श्रेष्ठवादद्देनिसुवदु ( अथवा याव ग्रंथवु इरलु ' अनंत ' शब्द वाच्यनाद श्रीहरिय नामगळन्नु परम भागवतरु

श्रवण, मनन माडुवदरिंद अदे श्रेष्ठवेनिसुवदु ) जनर तापवन्नु नाशमाडुवदरिंदलू, सज्जनरिंद श्लाघ्यवादद्दरिंदलू श्रीहरिय माहात्म्यवन्नु प्रतिपादनेमाडुव ग्रंथवे शास्त्रवेनिसुवदु. आद्दरिंद शास्त्रवन्नु रचिसतक्कवरु ई रीतियागिये माडतक्कद्दु ॥ ११ ॥

**नैष्कर्म्यमप्यच्युतभाववर्जितं नशोभते ज्ञानमलं निरंजनं ॥ कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म यदप्यकारणं ॥ १२ ॥**

न केवलं वासुदेवमहिमद्योतकयशोंकविधुरशास्त्ररचनमेव मोघं किंतु हरिभाक्तिविरहितनिर्निमित्तज्ञान-कर्मणी अपि निष्फले एवेति विज्ञापयतीत्याह नैष्कर्म्यमिति । नैष्कर्म्यं स्वतो निष्कर्मणो मुक्तेःसाधनं अलं निरंजनं-विषयसंमार्जनमलरहितं अत्यंतविरक्तिमद्वेदार्थविषयं परोक्षज्ञानमप्यच्युतभाववर्जितं भगवद्भक्तिरहितं हरावच्युततया निरंतरभावेन मनोयोजनेन रहितं वा न शोभते अधिकारिणोभीष्टफलं न प्रकाशयति, बंधकतया शश्वत्सर्वदाऽभद्रममंगलं ईश्वरे-हरौ नचार्पितं कर्म न शोभत इति कुतः-पुनः किमु वक्तव्यं । यद्यप्यकारणं फलकामनादिविधुरं तथापीत्यर्थः । शश्वद्भद्रमनुष्ठानकाले फलकाले वा मंगलं यत्कर्म्यं कर्म न शोभत इति कुतः पुनः यदप्यकारणं नित्यं कर्म हरौ नार्पितं चेत्तन्नशोभत इति किं वक्तव्यमिति वा । अच्युतभाववर्जितमित्यनेनापरोक्षज्ञानस्य भक्तिसाध्यत्वात्परोक्षोपपदमेवात्र ज्ञानं विवक्षितमिति ज्ञायते ॥ १२ ॥

वासुदेवन माहात्म्यवन्नु प्रतिपादनमाडुव यशःसिनिंद रहितवाद शास्त्ररचनेये व्यर्थवादद्देंतष्टे अल्ल, आदरे परमात्मनल्लि भक्तियिल्लदे निर्निमित्तक ( एनू फलापेक्षे इल्लद ) ज्ञानवू मत्तु कर्मवू सह निष्फलवादंथवे एंदु नारदरु विज्ञापिसुवरु—स्वतः मुक्तिगे साधनवाद विषयगळन्नु संपादनमाडुव, दोषगळिंद रहितवाद, अत्यंत विरक्तियिंद सहितवाद, वेददल्लि प्रतिपादनमाडल्पट्ट परमात्मने विषयनाद परोक्षज्ञानवादरू ( शास्त्रज्ञानवादरू ) परमात्मनल्लि भाक्तियुळ्ळद्दागदिद्दरे अदु शोभिसुवदिल्ल अंदरे इंथ ज्ञानवुळ्ळवनिगू इष्टवाद फलवु दोरेयुवदिल्ल. अंदमेले बंधनक्के कारणवाद्दरिंद यावागलू अमंगळवाद, श्रीहरिगे अर्पणमाडदेयिद्द कर्मवु फलापेक्षे मोदलादवुगळिंद रहितवादाग्यू इष्टवाद फलवन्नु संपादिशिकोडुवदिल्लेंदु एनु हेळतक्कद्दु. माडुव कालदल्लियू मत्तु फलकालदल्लियू अमंगळवाद काम्यकर्मवु अभीष्टफलवन्नु कोडुवदिल्ल, अंदमेले निर्निमित्तकवादाग्यू श्रीहरिगे अर्पणमाडदेइद्द नित्यकर्मवू सह इष्टवाद फलवन्नु कोडुवदिल्लेंदु एनु हेळतक्कद्दु. ई श्लोकदल्लि 'ज्ञान' एंब पददिंद शास्त्रदिंद हुट्टिद परोक्षज्ञानवेंतले अर्थमाडबेकु. याकेंदरे, अपरोक्षज्ञानवु भक्तियिंदले हुट्टतक्कद्दु. इल्लि '**अच्युतभाववर्जितं**' एंब विशेषणवु ज्ञानक्के इद्ददरिंद हरिभक्ति इल्लद शास्त्रज्ञानवू व्यर्थवेंदु हेळिदंतायितु. ॥ १२ ॥

**अतो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः ॥ उरुक्रमस्याखिलबंधमुक्तये समाधिनानुस्मर यद्विचेष्टितं ॥ १३ ॥**

अधुनालंबुद्धिहेतुं विज्ञापयतीत्याह अत इति । हे महाभाग-अपरिमितभाग्यनिधे, उक्तप्रकारेण कर्म-ज्ञानयोर्हरिभक्तिरहितयोर्निष्फलत्वाद्धर्मादीनामल्पकथनेनापि पूर्तिर्भगवन्महिम्नातिकथितेनाप्यपूर्तिरेवेति यतोतःसाक्षाच्छुचिश्रवाः विष्णुरेवातएव सत्ये-निर्दुःखानंदात्मभवे रतः अतएव शरणागतपालनादिधृतं व्रतं येन स तथा । अतएवामोघज्ञानोतएव भवान्पूज्यस्त्वं । सकलसज्जनसंसारबंधनविध्वंसनाय उरुक्रमस्य-बहुपराक्रमस्य तव यज्जगत्सृष्टि-पालनादिविशिष्टचेष्टितं तत्समाधिना-दर्शन-गुह्य समाधिभेदेन त्रिधा भिन्नानां भाषाणां मध्ये यथास्थितवस्तुकथनलक्षणया समाधिभाषयानुस्मर-भगवन्महिमाप्रतिपादकश्रीभागवताख्यग्रंथं कुरु । तेन कृतावतारप्रयोजनालंबुद्धिर्भविष्यतीति भावः । 'अखिलधर्मगुप्तये' इति पाठे समस्तभागवतधर्मरक्षणायेत्यर्थः ॥ १३ ॥

इन्नु आ वेदव्यासरिगे याव कारणदिंद समाधानवागुवदेंबदन्नु नारदनु विज्ञापिसुवनु–अपरिमित भाग्यवुळ्ळ व्यासरे, मेले हेळिदप्रकार परमात्मनल्लि भक्ति इल्लदे माडिद कर्मवू, ज्ञानवू निष्फलवागुवदरिंद, धर्म मोदलादवुगळन्नु स्वल्प हेळिदाग्यू साकागुवदु. परमात्मन माहात्म्यवन्नु एष्टु अतिशयवागि हेळिदाग्यू साकागुवदिल्ल, आद्दरिंद साक्षात् विष्णुस्वरूपराद, आद्दरिंदले दुःखरहितराद, आनंददल्लि मग्नराद, आद्दरिंदले शरणागत जनरन्नु संरक्षिसुव व्रतवन्नु धरिसिद, आद्दरिंदले व्यर्थवागदेइद्द ज्ञानवुळ्ळ, आद्दरिंदले पूज्यराद नीवु एल्ल सज्जनर बंधवन्नु नाशमाडुवदक्कागि बहळ पराक्रमियाद तम्म, सृष्टि, स्थिति मोदलाद एल्ल व्यवहारगळन्नु दर्शन, गुह्य मत्तु समाधि एंब मूरु भाषेगळल्लि यथास्थितवागि वर्णिसुवदक्के योग्यवाद समाधि भाषेयिंद परमात्मन माहात्म्येयन्नु वर्णनेमाडतक्क श्रीमद्भागवतवेंब ग्रंथवन्नु रचिसबेकु. अदरिंद तावु अवतारमाडिद प्रयोजनवु पूर्णवागि तमगे समाधानवागुवदु. 'अखिलधर्मगुप्तये' एंब पाठविद्दरे एल्ल भागवत धर्मगळन्नु रक्षिसुवदक्कागि एंब अर्थवन्नु हेळबेकु ॥ १३ ॥

**अतोन्यथा किंचन यद्विवक्षितं पृथग्दृशस्तत्कृतरूप-नामाभिः ॥ न कर्हिचित्क्वापि च दुःस्थितामतिर्लभेत वाताहतनौरिवास्पदं ॥ १४ ॥**

केवलधर्मादिविषयशास्त्रकृत्यानर्थोपि भवतीति ज्ञापयतीत्याह अतोन्यथेति । अतएव भगवन्महिम्नोन्यथा-विरुद्धतया यद्धर्मादिपुरुषार्थकथनाय विवक्षितं तत्किंचन-यत्किंचित्रपुरुषार्थोपयोगि, कुतस्तत्कृतरूप-नामभिस्तस्मिन् ग्रंथे धर्मादिफलत्वेन प्रतिपादितस्वर्गादिगतलावण्यादिरूपमदनकालिकेत्यादिनामवत्पदार्थैः पृथग्दृशस्ते मम सुखहेतव इति वस्त्वयथार्थज्ञानिनो रागादिदोषदुष्टत्वेन दुःस्थिता मतिः कर्हिचित्क्वापि कस्मिंश्चिद्विषयेपि समुद्रे वातेन-वायुना आहता-विघटिता नौ-स्तरीवास्पदमाश्रयं नलभेतेत्येकान्वयः । तस्मात्केवलधर्मादिविषयशास्त्रकृतिरनर्थकारीति भावः । अतोन्यथा श्रीभागवतकृतिमंतरेण यत्किंचनग्रंथकरणं विवक्षितं । तत् ग्रंथतत्कल्पितरूप-नामभिर्मुग्धस्येति वा । 'च' शब्दान्नरकपातफलमेव स्यादिति सूचयति ॥ १४ ॥

केवल धर्म मोदलादवुगळन्ने हेळतक्क शास्त्रवन्नु माडुवदरिंद अनर्थवादरू आगुवदेंदु हेळुवरु—परमात्मनिगे विपरीतवागि धर्म मोदलाद पुरुषार्थगळन्नु हेळुव उद्देशदिंद माडुव ग्रंथवु मोक्षके एनू उपयोगवागुवदिल्ल. यार्केंदरे आ ग्रंथदल्लि हेळुव धर्म मोदलादवुगळिगे फलवेंदु प्रतिपादनेमाडल्पट्ट स्वर्ग मोदलादवुगळल्लि इरुव लावण्य मोदलाद रूपवू, मदनकलिका मोदलाद हेसरुगळू इवुगळुळ्ळ पदार्थगळिंद अवु तन्न सुखकारणगळेंदु वस्तुविन निजज्ञानविल्लद पामरन राग मोदलाद दोषगळिंद दुष्टवाद चंचलवाद बुद्धियु समुद्रदल्लि बिरुगाळियल्लि शिक्क नाविनंते एंदादरू एल्लियादरू स्थैर्यवन्नु होंदुवदिल्ल. आद्दरिंद केवल धर्म मोदलादवुगळन्ने हेळतक्क शास्त्रगळन्नु माडुवदु अनर्थक्के कारणवादद्दु. अथवा श्रीभागवतग्रंथवन्नु बिट्टु एरडने यावदादरोंदु ग्रंथवन्नु माडुव उद्देशविद्दल्लि आ ग्रंथदल्लि हेळल्पडुव रूप नामगळिंद मोहितनाद मुंताद अर्थवन्नु माडबेकु. 'च' शब्ददिंद नरकदल्लि बीळुव फलवे दोरेयुवदेंदु सूचिसुवदु ॥ १४ ॥

## जुगुप्सितं धर्मकृतेनुशासनं स्वभावरक्तस्य महान् व्यतिक्रमः ॥ यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥

न केवलमनर्थकार्येव भवेदन्येषां निंदितमधर्मकारीचेति ज्ञापयति जुगुप्सितमिति । स्वतएव प्रवृत्तिधर्मादिषु रागिणोऽज्ञस्य प्रवृत्तिधर्मादिकृतेऽनुशासनं कुर्विति प्रेरणं तु जुगुप्सितं, त्वादृशैरिति शेषः । न केवलं निंदितं किंतु महान्व्यतिक्रमः । वृक्षादधः पतितस्य दंडेन ताडनवन्निःसीमोऽन्यायः । कुतः 'स यत्प्रमाणं कुरुत' इति न्यायाद्यतो धर्म इति तस्य जनस्य इतरस्थितो जनो निवारणं न मन्यते इत्यन्वयः । यस्य

भवादृशस्य वचनाद्धर्मोयमित्यनुष्ठितस्तस्य प्रवृत्तिमार्गस्थितस्य जनस्येतरस्मिन्निवृत्तिमार्गे स्थितः जनः शुकादिर्नायं धर्मः नचरतेति निवारणं न करोति, तस्मात्तादृशग्रंथकृतिरनपेक्षितेति भावः ॥ ( यद्वाक्यत इति । यस्य भवादृशस्य श्रेष्ठस्य वाक्यतो-वचनात् प्रतीत एव धर्मः मुख्यपुरुषार्थ-हेतुरिति यदुत्तरो जनः अधिकरीस्थितः विश्वस्तस्य जनस्य कुमार्गे प्रवर्तमानस्य निवारणं सः न मन्यतेचेत्तस्य श्रेष्ठस्य महान् व्यतिक्रमः-अन्यायो यतः अतो जुगुप्सितमिति संबंधः । कुमार्गे सक्ताः स्वस्मिन् विश्वस्ताश्चेत्तस्मात्ते वारणीया एव न पुनः प्रवर्तनीया इति कृपालोर्धर्मएवेति भावः ) ॥ १५ ॥

धर्म मोदलादवुगळु केवल अनर्थक्के कारणवेंदष्टे अल्ल; एरडनेयवरिंद निंद्यवू आगुववु. हागू अधर्मक्के कारणवू आगुववु एंदु हेळुत्ताने—एरडनेयवर प्रेरणेइल्लदे स्वतः संसारधर्मदल्लि आसक्तनाद अज्ञनिगे संसारधर्मद विषयवागिये प्रेरणेयन्नु माडुवदु तम्मंथवरिंद निंद्यवादद्दंतष्टे अल्ल, महत्तरवाद अन्यायवू आगुवदु. गिडदिंद केळगे बिद्दवनन्नु बडिगेयिंद ( कोलिनिंद ) होडेयोणदरंते अळते इल्लद अन्यायवागुवदु. याकेंदरे ' स यत्प्रमाणं कुरुते ' एंदु गीतावाक्यदल्लि हेळिद्दरिंद दोड्डवरु हेळिद्दे धर्मवेंदु तिळकोळ्ळतक्क जनरन्नु इतर विद्वज्जनरु ( बल्लवरु ) आ मनुष्यनु माडुव आचरणेयन्नु बिडिसलाररु. तम्मंथ दोड्डवरु हेळिद्दरिंद इदे धर्मवेंदु आचरिसुत्त प्रवृत्तिमार्गदल्लिद्द मनुष्यनन्नु निवृत्तिमार्गदल्लिद्द शुक मोदलाद्वरु इदु धर्मवल्ल, इदन्नु आचरिसबेडिरि एंदु बिडिसलाररु. आद्दरिंद संसारमार्गवन्नुपदेशमाडतक्क ग्रंथरचनेयु इष्टवल्ल ॥ १५ ॥

विचक्षणोस्यार्हति वेदितुं विभोरनंतपारस्य निवृत्तितः सुखं ॥ प्रवर्तमानस्य गुणैरनात्मनस्ततो भवान्दर्शय चेष्टितं विभोः ॥ १६ ॥

समाधिभाषात्मकग्रंथेऽधिकार्यभावादुपरम्यत इति नवक्तव्यमिति विज्ञापयति विचक्षण इति । निवृत्तितो गुणैः प्रवर्तमानस्यानात्मनोनंतपारस्य विभोः सुखं विचक्षणो वेदितुमर्हति यस्मात्ततो भवान् पूज्यस्त्वं विभोश्चेष्टितं दर्शयेत्येकान्वयः । अनुष्ठितनिवृत्तिधर्मात्सत्वादिगुणैर्जगत्सृष्ट्यादौ प्रवर्तमानस्यस्वामिकार्यस्य जीवस्यापरिमितपूर्तेर्विभोर्भगवतः सकाशात् यद्विष्यत्सुखं भवति तत्सुखं विचक्षणो-विशिष्टाचार्यः सात्विकप्रकृतिर्ज्ञा

१. एतावत् व्याख्यानं प्राचीनपुस्तकेष्वनुपलब्धत्वात्प्राकृतभाषया व्याख्यातं ।

योग्य इति यस्मात्तस्माद्विभोः-सर्वगस्य हरेश्चरितं समाधिभाषात्मकग्रंथकरणेन ज्ञापयेत्यतोधिकार्यभावान्नोपरंतव्यमिति भावः । अनात्मनो बुध्या-देर्गुणैः-सत्वादिभिः शब्दादिषु प्रवर्तमानस्य जनस्य सुखाय विभोश्चेष्टितं दर्शयेति वा ॥ १६ ॥

समाधिभाषेयिंद ग्रंथवन्नु रचनेमाडिदरे अदन्नु तिळकोळ्ळुव अधिकारिगळिल्लवादरिंद बिट्टिरुवेवु एंदरे हेळुवरु-ई सृष्टि मोदलाद कार्यवु श्रीहरिय सेवा एंदु तिळियदे इद्दरिंद सत्व, रज मत्तु तम एंब मूरु प्रकृतिगुणगळिंद सृष्टि मोदलादवुगळल्लि बंदिरुव सात्विकप्रकृतियाद ( मुक्तियोग्यनाद ) जीवनु निवृत्ति ( वैराग्य ) धर्मवन्नु स्वीकरिसुवदरिंद शास्त्रवन्नु विचारमाडुत्त कुशलनागियू, सदाचारसंपन्ननागियू मुंदे श्रीहरियिंद मोक्षदल्लि बरतक्क आनंदवन्नु तिळकोळ्ळुवदक्के योग्यनाद अधिकारियु इरुवनु. आद्दरिंद इंथ अधिकारिगळ उद्धारार्थवागि समाधिभाषेयिंद श्रीहरिय पराक्रमगळन्नु वर्णिसुव श्रीमद्भागवतवन्नु रचने माडबेकु. अधिकारि-गळिल्लेंदु बिडबारदु. अथवा बुद्धि मोदलादवुगळिंद सत्वादिगुणगळिंद युक्तनागि शब्द मुंताद व्यवहारवन्नु माडुव जनर सुखक्कागि श्रीहरिय पराक्रमगळन्नु वर्णने माडि तोरिसरि ॥ १६ ॥

## त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्नपक्वोथ पतेत्ततो यदि ॥ यत्रक्व वा भद्रमभूदमुष्य कोवार्थ आप्तो भजतां स्वधर्मं ॥ १७ ॥

इतोपि प्रवृत्तिधर्मोपदेशान्निवृत्तिधर्मोपदेशो वरीयानित्याह त्यक्त्वेति । अथ स्वधर्मं त्यक्त्वा हरेश्चरणांबुजं भजंस्ततः यद्यपक्वः पतेत्तदमुष्य यत्रक्वाभद्रमभूत् । स्वधर्मं भजतां को वा अर्थ आप्तएवेत्येकान्वयः । भगवदविषयस्वधर्मानुष्ठानात्मकप्रवृत्तिधर्मं त्यक्त्वा निवृत्तिधर्मविधायकशास्त्रोक्ता-चारैः हरेः पादपद्मं सेवमानः पुरुषस्तस्मादनधिगतापरोक्षज्ञानादिस्तत्फलपरिपाको रागाद्यंतरायविहतः स्खलेत्तथाप्यमुष्य पुंसः 'क्षिप्रं भवति धर्मात्मा' इत्यादिप्रमाणाद्यत्रक्वा जन्मांतरे श्रीमदादिकुलोद्भूतस्य निवृत्तिधर्मात्मकं भद्रमेष्य तु निश्चितं यत्तदतीतत्वेन भण्यत इति वचनादभूदविघ्नत्येव । केवलं प्रवृत्तिधर्मं भजतामनुतिष्ठतां अस्खलनेपि धर्मादिषु को वा पुरुषार्थ आप्तो न कोपीति भावः । तस्मान्निवृत्तिधर्मविधायकशास्त्रं भवान्करोत्विति प्रार्थये ॥ १७ ॥

इन्नादरू संसारमार्गोपदेशदकिंतलू वैराग्यमार्गोपदेशवे श्रेष्ठवाददेंदु हेळुवरु-श्रीहरिगे अर्पण माडदेयिद्द स्वधर्मानुष्ठान ( कुटुंबभरण ) वेंब प्रवृत्तिमार्गवन्नु बिट्टु, निवृत्तिधर्म ( वैराग्यधर्म ) वन्नु हेळुव शास्त्रदंते नडेयोणदरिंद श्रीहरिय पादपद्मवन्नु सेविसुव पुरुषनु आ सेवादिंदागतक्क अपरोक्षज्ञानवेंब फलद पारवन्नु होंदिदाग्यू

संसारद स्नेह मोदलाद विघ्नगळ पेट्टिनिंद जारिबिद्दाग्यू ई पुरुषनिगे 'क्षिप्रं भवाति' (तीव्र उत्धूतनागुवनु) एंब गीताप्रमाणदिंद यावदादरोंदु जन्मदल्लि ऐश्वर्य, सदाचार मुंतादवुगळिंद संपन्नर कुलदल्लि वैराग्यधर्मवेंब क्षेमवु दोरदे दोरेयुवदु. "मुंदे बरुव निश्चयविद्दरे हिंदे आददरंते निश्चयवेंदु हेळल्पडुवदु." केवल (श्रीहरिगे अर्पिसदे) संसारमार्गवन्नु अनुसरिसुव जनरिंद तप्पदंते धर्मानुष्ठान माडिदाग्यू याव पुरुषार्थवु संपादितल्पट्टितु? यावदू इल्ल एंब अभिप्रायवु. आदकारण तावु वैराग्यमार्गवन्नु हेळतक्क श्रीभागवत शास्त्रवन्नु रचिसबेकेंदु प्रार्थिसुवेनु ॥ १७ ॥

**तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः ॥ तल्लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा ॥ १८ ॥**

तस्माद्विवेकिना प्रवृत्तिधर्मं विहाय निवृत्तिधर्मएवानुष्ठेय इत्याह तस्येति । कोविदस्तस्यैव हेतोः प्रयतेत, उपर्यधो भ्रमतां यन्नलभ्यते । गभीररंहसा कालेनान्यतः सर्वत्र तद्दुःखवत् सुखं लभ्यत इत्येकान्वयः । अनंतपारस्येति हरेर्मुख्यप्रसादलभ्यं यत्सुखमुक्तं तस्यैव हेतोर्नान्यस्य तत्सुख-हेतुनिवृत्तिधर्माख्यसाधनस्यार्थे प्रयत्नं कुर्याद्यत्सुखं भू-स्वर्गादिषु प्रवर्तमानानां प्रवृत्तिधर्माणां पुरुषाणां न सुलभं निरंतरं निवृत्तिधर्मं सेवमानानामव्यक्त वेगेनानेकजन्मपरिमितेन कालेनान्यतः सर्वदेवेभ्योत्यंतभिन्नाद्धरेः सर्वदेश-कालेषु निर्दुःखं स्वरूपसुखमभिव्यज्यते, तस्मान्निवृत्तिधर्म एव श्रेयानिति भावः । यथा पापिनां प्रयत्नमंतरेण दुःखं लभ्यते तथा निवृत्तिधर्मगामारि साधनसाध्यं विना निरायासेन सुखं लभ्यत इत्यस्मिन्नर्थे 'दुःखवत्' इति दृष्टांतो वा । स्वर्गादौ भ्रमतां यत्सुखं न लभ्यते विवेकी तस्यैव सुखस्य हेतोः प्रयतेत । 'एव' शब्दव्यावर्त्यमाह तदिति । अन्यतो विषय-भोगात् यद्दुःखोपेतं सुखं तद्गभीररंहसा कालेन सर्वत्र लभ्यते, तस्मात्तादृशसुखार्थं न यतनीयं । किंतु तद्व्यतिरिक्तस्य नित्यस्य केवलस्य स्वरूप सुखस्येति वा ॥ १८ ॥

आदकारण विवेकियाद पुरुषनु संसारमार्गवन्नु बिट्टु वैराग्यमार्गवन्ने आश्रयमाडतक्कद्दु एंदु हेळुवरु-श्रीहरिय मुख्य प्रसादर्दिद दोरेयतक्क याव (मुक्तिय) सुखवो, आ सुखद उद्देशवागिये प्रयत्नमाडतक्कद्दु. आ सुखवु दोरेयतक्क साधनवाद वैराग्यधर्मद उद्देशवे प्रयत्न माडतक्कद्दु. याव सुखवु भूलोक, स्वर्गलोक मुंतादवु-

१ अधमप्रसादर्दिद श्रवण भक्ति मुंतादद्दु हुट्टवदु स्वर्गप्राप्ति; मध्यमप्रसाददिंद ज्ञानप्राप्ति, जनोलोकादि; उत्तमप्रसादवु अपरोक्षज्ञानानंतर मुक्तिगे साधकवादद्दु.

कल्पांत इदमादाय शयानेंभस्युदन्वतः ॥ शिशयिष्णोरनुप्राणं विवेशांतरहं विभोः ॥ ३३ ॥

हरिं ध्यायन् मुक्तस्त्वं कं लोकं गत इति तत्राह कल्पांत इति । अहं कल्पावसाने स्वसृष्टमिदं विश्वमादाय स्वोदरे निवेश्य उदन्वतोंभसि शेषपर्यंके शयाने हरौ शिशयिष्णोः-शयितुमिच्छोर्विरिंचस्य अंतरनुप्राणं-अंतर्गच्छच्छ्वासमनुविवेश-प्रविष्टवानस्मीत्यन्वयः ॥ ३३ ॥

श्रीहरियन्नु ध्यानमाडि देहवन्नु बिट्टु नीनु याव लोकक्के होदि एंदरे हेळुवनु—नानु हिंदिन कल्पवु मुगिदाग्ये तन्निंद सृष्टवाद सकल जगत्तन्नु तन्न उदरदल्लि-ट्टुकोंडु प्रलयोदकदल्लि शेषपर्यंक ( मंच )द मेले मलगिरुव परमात्मन उदरप्रवेशमाडिद ब्रह्मदेवन श्वासदल्लि प्रवेशमाडिदेनु ॥ ३३ ॥

सहस्रयुगपर्यंत उत्थायेदं सिसृक्षतः ॥ मरीचिमिश्रा ऋषयः प्राणेभ्योहं च जज्ञिरे ॥ ३४ ॥

सहस्रयुगपर्यंते चतुर्युगसहस्रपरिमितस्वनिवेशावसाने विष्णोरुत्थायोत्पद्य इदं सिसृक्षतो विरिंचस्यांकादहं जज्ञे, मरीच्यत्रिमुख्या ऋषयश्च तस्य प्राणेभ्यो जज्ञिर इत्येकान्वयः ॥ ३४ ॥

नाल्कु युगगळु सहस्रावर्ति तिरुगुवष्टु कालद परमात्मन निद्रासमाप्तिय नंतरदल्लि आ परमात्मनु चतुर्मुख ब्रह्मनन्नु सृष्टिमाडिदनंतर, आ ब्रह्मदेवन तोडेयिंद नारदनेंब हेसरुळ्ळवनागि नानु हुट्टिदेनु. मरीचियै मोदलाद ऋषिगळू आ चतुर्मुखन प्राणदिंद हुट्टिदरु. ॥ ३४ ॥

अंतर्बहिश्च लोकांस्त्रीन्पर्येम्यस्कंदितव्रतः ॥ अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३५॥
देवदत्तामिमां वीणां स्वरब्रह्मविभूषितां ॥ मूर्छयित्वा हरिकथां गायमानश्चराम्यहं ॥ ३६ ॥

विष्णुनाम्नो यजमानादपि महतो विष्णोरनुग्रहादप्रतिहतगमनोस्खलितब्रह्मचर्यादिव्रतोहं त्रीन् लोकानंतर्बहिश्च पर्येमि-पर्यटामीत्येकान्वयः ३५॥
तदेवाह देवेति । स्वरब्रह्मविभूषितां-सप्तस्वरलक्षणवेदेनालंकृतां नाम्ना देवदत्तामिमां वीणां मूर्छयित्वा स्वराणामारोहणावरोहणक्रमो मूर्छामूर्छनागतिं कारयित्वा हरिकथां गायमानोहं चरामीत्यन्वयः ॥ ३६ ॥

अनंतर श्रीविष्णुविन परमानुग्रहदिंद तप्पदंथ ब्रह्मचर्यवुळ्ळवनागि, मूरुलोकगळ ओळगू, होरगू सहवागि नन्न गमनके प्रतिबंधकविल्लदंते ब्रह्मघोषवन्नु माडुव सप्त स्वरगळिंद युक्तवाद ' देवदत्त ' एंब हेसरुळ्ळ ई वीणेयन्नु बारिसुत्त, आरोहण अवरोहण क्रमदिंद सुस्वरवाद आलापगळिंद श्रीहरियन्नु गानमाडुत्त ( ईग्यू ) संचार माडुवेनु ॥ ३५ ॥ ३६ ॥

**प्रगायतश्च वीर्याणि तीर्थपादः प्रियश्रवाः ॥ आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥ ३७ ॥**

तीर्थ-गंगाख्यं पादे यस्य स तीर्थपात्तस्य वीर्याणि-चरितलक्षणानि प्रकृष्टं गायतः । ' च ' शब्द एवार्थे । एवमुपासकस्यैव मम चेतसि प्रियश्रवाः-भगवान् आहूत इव शीघ्रमविलंबितं दर्शनं याति-अपरोक्षीभवतीत्यन्वयः ॥ ३७ ॥

आ श्रीहरिय पराक्रमगळन्नु गानमाडतक्क ननगे जगत्तन्नु पवित्र माडतक्क गंगेयु यावातन पाददल्लि इरुवळो आ पुण्यकीर्तियाद परमात्मनु करसिकोंडवरु बरुवंते तीव्रदिंद नन्न चित्तदल्लि बंदु दर्शनकोडुवनु अंदरे प्रत्यक्षनागि तोरुवनु ॥ ३७ ॥

**एतदातुरचित्तानां मात्रास्पर्शेच्छया[1] मुहुः ॥ भवसिंधुप्लवो दृष्टो हरिचर्यानुवर्णनं ॥ ३८ ॥**

हरिचर्यानुवर्णनं-समाधिभाषया भगवच्चरितवर्णनं यत्तदेतत् मुहुर्मात्रास्पर्शेच्छया प्राप्तिनिमित्तमातुरचित्तानां क्लिष्टमनसां पुंसां भवसिंधुप्लवः-संसारसागरतरीविशेषः दृष्टः, साक्ष्यादिप्रमाणैरिति शेषः । इति यस्मात्तस्मात्सात्विकहिताय सैव वर्णनीयेति भावः ॥ ३८ ॥

समाधि भाषेयिंद ( तत्वमार्गवन्नु वर्णने माडुव पद्धतियिंद ) श्रीहरिय चरित्रेयं वर्णनेयु विषयगळन्नु भोगमाडबेकेंब अपेक्षेयिंद आतुरचित्तराद, दुःखवडतक्क जनगळिगे संसारवेंब समुद्रवन्नु दाटुवदक्के नौकास दृशवादद्दु. ई संगतियु साक्षि ( स्वरूपभूत इंद्रिय ) एंब प्रमाणदिंदले सिद्धवादद्दु. आदकारण सात्विक जनगळिगे हितवागुवदक्कागि आ श्रीमद्भागवतवन्ने वर्णने माडबेकु ॥ ३८ ॥

**यमादिभिर्योगपथैः काम-लोभहतो मुहुः ॥ मुकुंदसेवया यद्वत्तथात्माद्धा न शाम्यति ॥ ३९ ॥**

१ मात्रा स्पर्शेच्छया–मात्राः-विषयाः, तेषां स्पर्शाः-भोगाः, तेषामिच्छया । आतुराणि चित्तानि । ( यादुपत्य )

तर्हि यमादियोगानुष्ठानविधानं व्यर्थमिति तत्राह यमादिभिरिति । मुकुंदकथासेवया यथात्मा-जीवोंजसा शाम्यति भगवन्निष्ठबुद्धिमान्भवात तथा काम-लोभाभ्यां वैरिभ्यां हतः-पीडितोनुष्ठितैर्योगमार्गैर्यमादिभिरद्धा न शाम्यति, तस्माद्धरिकथासेवैव संसारतरीत्येकान्वयः ॥ ३९ ॥

हागादरे यम-नियम मुंताद योगमार्गवु व्यर्थवायितल्ल, एंदरे हेळुवरु—मुक्तिदायकनाद श्रीहरिय कथेयन्नु केळुवदरिंद जीवात्मनु हेगे भगवन्निष्ठा बुद्धियुळ्ळ ( श्रीहरियल्लि एकाग्रमनःसुळ्ळवनागुवनो हागे काम, लोभगळेंब वैरिगळिंद पीडितनागि, अनुष्ठानमाडिद योगमार्गगळिंद एंदिगू जीवात्मनु शांतचित्तनागि श्रीहरियल्लि मनःसुळ्ळवनागुवदिल्ल. आदकारण श्रीहरिकथेये संसारवेंब समुद्रक्के नौकासदृशवादद्दु ॥ ३९ ॥

## सर्वं तदिदमाख्यातं यत्पृष्टोहं त्वयानघ ॥ जन्म-कर्म रहस्यं मे भवतश्चात्मतोषणं ॥ ४० ॥

उपसंहरति सर्वमिति । अतीतजन्मविषयत्वाद्रहस्यं मम जन्म-कर्मप्रत्यहं त्वया पृष्टः तदिदं सर्वमाख्यातं । तुभ्यमिति शेषः । कीदृशं नित्यसंतुष्टस्य तवापि भवतः आत्मनो मनस्तोषणं-तुष्टिजनकं भवत आख्यानमिति वा । ' च ' शब्दः जन्म-कर्मणोः समुच्चये । श्रोतृणामात्मनां तृप्तिजनकमिति वा ॥ ४० ॥

ई कथेयन्नु मुगिसुवरु—हे व्यासरे, तावु प्रश्नमाडिद्दके नन्न रहस्यवाद हुट्टोणिके ( जन्मकथे ) यन्नू मत्तु नानु माडिद केलसगळन्नू तावु नित्यदल्लि तृप्तरादाग्यू नन्नमेले अंतःकरणमाडबेकेंदु, ( केळतक्क जनगळिगे तृप्तिकरवाद ) ई नन्न कथेयन्नु हेळिदेनु ॥ ४० ॥

## सूत उवाच—एवं संभाष्य भगवान्नारदो वासवीसुतं ॥ आमंत्र्य वीणां रणयन्ययौ याद्दच्छिको यतिः॥४१॥

सूतः व्यास-नारदसंवादं शौनकादीन् ब्रूत इत्याह एवमिति । वासवीसुतं-सत्यवत्याःपुत्रं व्यासं एवं पूर्वोक्तप्रकारेण संभाष्य-उक्त्वा गच्छामीति आमंत्र्य, आज्ञां गृहीत्वा, वीणां रणयन्-ध्वनयन् ययौ । याद्दच्छिकः-अतर्कितगमनागमनः । यतिर्निर्जितेंद्रियग्रामः ॥ ४१ ॥

ई व्यास-नारद संवादवन्नु सूतनु शौनकरिगे हेळुवनु—ई प्रकार सकलेंद्रियगळन्नु निग्रहमाडिद, योचनेयिल्लदे सर्वत्रदल्लियू संचारमाडतक्क, पूज्यनाद नारद महर्षियु ' वासवी ' सत्यवती पुत्रराद वेदव्यासरन्नु कुरितु होगिबरुवेनेंदु हेळि, तन्न वीणा ध्वनिमाडुत्त अवर अप्पणेयन्नु स्वीकरिसि होरटनु ॥ ४१ ॥

अहो देवर्षिधन्योयं यः कीर्तिं शार्ङ्गधन्वनः ॥ गायन्माध्व्या गिरा तंत्र्या रमयत्यातुरं जगत् ॥ ४२ ॥

इती श्रीमद्भागवते महापुराणे प्रथमस्कंधे षष्ठोध्यायः ॥ ६ ॥ ॥ ७ ॥

शार्ङ्गधन्वनो हरेः कीर्तिं माध्व्या-मधुरया गिरा तंत्र्या-वीणया गायन् आतुरं-क्लिष्टं जगद्रमयति यः सोयं देवर्षिर्नारदः धन्यः-कृतकृत्यः । अहो आश्चर्यमेतत् । शूद्रयोनेरप्येतादृशमाहात्म्यभूदिति । नारं-ज्ञानं ददातीति नारदः । अरदो-दोषदो न भवतीति वा । आरवदंगारकवदायुःखंडको न भवतीति वा । दोअवखंडने ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे पदरत्नावल्यां टीकायां षष्ठोध्यायः ॥ ६ ॥

अहहा, शार्ङ्गपाणियाद **परमात्मन** कीर्तियन्नु गान माडुत्त, मधुर स्वरवुळ्ळ वीणेयन्नु बारिसुत्त, दुःखबडतक्क जनगळिगे संतोषवन्नु कोडुत्त संचरिसुव ई नारदनु कृतकृत्यनु. ई संगतियु बहळ आश्चर्यकरवादद्दु, यार्केंदरे शूद्रजातियलि हुट्टिदवनिगे इंथ माहात्म्ये उंटायितष्टे! '**नारद**' ज्ञानवन्नु कोडतक्कवनु. अथवा यारिगू दोषकोडतक्कवनल्ल, अथवा मंगळनंते[1] जनर आयुष्यवन्नु नाश माडतक्कवनल्ल. इन्नु तन्न दृष्टिबिद्द जनरन्नु बदुकिसुव अंतःकरणियु ॥ ४२ ॥

हीगे श्रीमद्भागवतवेंब महापुराणदल्लि प्रथमस्कंधदल्लि मूल मत्तु टीकेगळिगनुसारवागि अलंकरिसिरुवंथ 'सुखार्थबोधिनि' एंब कन्नड टीकेयल्लि आरने अध्यायवु मुगिदितु ॥ ६ ॥

---

१ नवग्रहगळल्लिद्द मंगळनु केट्ट स्थानक्के बंदरे जनर आयुष्यवन्नु हरण माडुवनेंदु ज्योतिःशास्त्रदल्लि हेळुवदु.

**शौनक उवाच–निर्गते नारदे सूत भगवान् बादरायणः ॥ श्रुतवांस्तदभिप्रेतं ततः किमकरोद्विभुः ॥१॥**

भागवतकरणापदेशेन भगवति भक्तिस्तन्माहात्म्यं च प्रतिपाद्यतेऽस्मिन्नध्याये निर्गत इति । तत अभिप्रेतं-भागवतकरणं तस्य नारदस्य वा । ततो-नारदनिर्गमनानंतरं ॥ १ ॥

श्रीमद्भागवतवन्नु माडतक्क निमित्तदिंद परमात्मनल्लि भक्तियू, आ परमात्मन महात्म्येयू ई अध्यायदल्लि वर्णनमाडल्पडुवदु-( शौनकनु सूतनन्नु कुरितु प्रश्ने माडुवनु ) एलै सूतने, आ नारदनु होदनंतर पूज्यराद वेदव्यासरु आ भागवतवन्नु माडबेकेंब नारदन अभिप्रायवन्नु केळि, आ समर्थराद वेदव्यासरु मुंदे एनु माडिदरु ॥ १ ॥

**सूत उवाच–ब्रह्मनद्याः सरस्वत्या आश्रमः पश्चिमे तटे ॥ शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ॥२॥**

लकुटीकृतशम्यानाम याज्ञीयतरुशाखापतितस्थले कृतशालांतर्यज्ञकरणात 'शम्याप्रास' इति लोके रूढिः । सत्रं वर्धयाति-अधिकफलं करोतीति सत्रवर्धनः ॥ २ ॥

( सूतनु उत्तरवन्नु हेळुवनु )--ब्राह्मणरु वासमाडतक्क सरस्वतीनदिय पश्चिमदंडेयल्लि ऋषिगळ यज्ञद फलवन्नु हेच्चिसतक्क 'शम्याप्रास 'एंब हेसरुळ्ळ आश्रमवुंटु. शम्याप्रास ' शमि ' एंदरे यज्ञदल्लि उपयोगमाडतक्क ओंदु जातिय कट्टिगेयु. आ ' शमि ' एंब कट्टिगेयु बिद्दिरुव स्थळदल्लि शालावन्नु हाकि अल्लि यज्ञवन्नु माडि आ स्थळदल्लि आश्रमवन्नु हाकिद्दरिंद इदक्के ' शम्याप्रास ' एंदेन्नुवरु ॥ २ ॥

**तस्मिन्स्व आश्रमे व्यासो बदरीखंडमंडिते ॥ आसीनोप उपस्पृश्य प्रणिदध्यौ मनाश्चिरं ॥ ३ ॥**

ऋषिभक्षणयोग्यफलबदरीवृजसमूहालंकृते ऋषिसामान्याश्रमे अतीतानागतवर्तमानानंतकोटिब्रह्मांडबाह्माभ्यंतरवर्त्यपरिमितपदार्थानशेषविशेषैः सहकरतलामलकवत्सततमपरोक्षीकुर्वतश्चिरं मनःप्रणिधानमसुरजनमोहनायेति बोद्धव्यं ॥ ३ ॥

ऋषिगळु भक्षणमाडलिक्के योग्यवाद हण्णुगळुळ्ळ बोरेगिडगळ समूहदल्लिद्द ( आ हिंदे हेळिद ) तम्म आश्रमदल्लि कुळितुकोंड वेदव्यासरु उदकवन्नु स्पर्शमाडि, तम्म मनस्सिनिंद बहु वेळेयवरिगे योचनेयन्नु माडिदरु. अनंत कोटि ब्रह्मांडगळ ओळहोरगू व्यापनाद, सकल पदार्थगळ सर्वदा सर्वविषयक अपरोक्षज्ञानवुळ्ळ परमात्मनु बहळ होत्तु योचनेमाडिदनेंबदु असुरजनमोहनक्कागिये होर्तु मत्तेनु कारणविल्ल ॥ ३ ॥

## भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ॥ अपश्यत्पुरुषं पूर्णं मायां च तदपाश्रयां ॥ ४ ॥

ध्यानेन किं लब्धमभूदिति तत्राह भक्तीति । भक्तियोगेन सम्यगेकाग्रतया हरौ प्रणिहिते-सम्यक् स्थापिते, अमले-रागादिदोषरहिते, सतां पुरुषाणां मनसि प्रत्यक्षीभवंतं पूर्णं-देशतःकालतो गुणतश्चापरिच्छिन्नं पुरुषं परमात्मानं जीवानां संसारकरीं मायां-बंधकशक्तिं च तदपाश्रयां-तस्य हरेरधीनामपश्यदित्येकान्वयः । प्रकृति-पुरुषौ विविक्ततया द्रष्टुं लोकानां मनसि सम्यक् प्रणिहितेसातिशक्यावित्यपश्यदिति वा । एतदभिप्रायेण तदपाश्रयामित्युक्तं । ततोपगत्याश्रित्य स्थितां स्थातुमीक्षापथेऽमुयेति वक्ष्यति ॥ ४ ॥

ध्यानदिंद एनु दोरियितेंदरे हेळुवरु–सरियागि एकाग्रमनस्सिनिंद श्रीहरियल्लि स्नेह मोदलाद दोषगळिल्लद मनस्सन्निट्ट नानु सज्जनर मनस्सिनल्लि प्रत्यक्षनागुव, देशदिंदलू, कालदिंदलू, गुणगळिंदलू अपारिमितनाद परमात्मनन्नू मत्तु जीवरिगे संसारबंधवन्नु कोडतक्क परमात्मन अधीनळाद ‘ माया ’ एंब हेसरुळ्ळ रमादेवियन्नू कंडेनु. प्रकृति-पुरुषरन्नु सरियागि भक्तियुळ्ळ जनरु बेरे बेरे तम्म मनस्सिनल्लि नोडुवरु एंदु वेदव्यासरु विचार माडिदरु. ई अभिप्रायवन्नु स्थातुमीक्षापथेऽमुया ’ एंब मुंदे बरतक्क भागदल्लि हेळुवरु ॥ ४ ॥

## यया संमोहितो जीव आत्मानं त्रिगुणात्मकं ॥ परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥ ५ ॥

अनिर्वाच्याविद्या-मायानाम अतः कथं बंधकशक्तिरियमित्याशंक्य ऽनिर्वाच्यायाः अर्थक्रियायोगादस्यास्तद्दर्शनादत्र बंधकशक्तिरेवोच्यत इत्यभिप्रेत्याह ययेति । परोपि-त्रिगुणात्मकप्रकृतेरन्योपि यया संमोहितो जीव आत्मानं त्रिगुणात्मकं-त्रिगुणोपादानकदेहरूपं मनुते, तत्कृतं-मायाकृतं तादृशमानकृतं वा । जननमरणाद्यनर्थं-अहं कर्तेत्यनर्थं चाभिपद्यत इत्यन्वयः । तस्मादेवंविधमायाबंधनिवर्तकमपरोक्षज्ञानद्वारा भक्तियोगमद्राक्षीदिति भावः ॥ ५ ॥

माया एंदरे अनिर्वाच्य ( हेळलिके बारदे इद्दद्दु ) मत्तु अज्ञानस्वरूपवादद्दु, आद्दरिंद बंधकशक्तियुळ्ळद्देंदु हेगे हेळिदिरि एंदरे हीगेंदु विवेकमाडि हेळुवदक्के बारद वस्तुवु याव केलसक्कू उपयुक्तवल्ल. प्रकृतक्के ई माया एंब वस्तुवु केलसक्के बरतक्कद्दाद्दरिंद बंधक शक्तियुळ्ळद्देंतले हेळुवरु–याव मायेय ( प्रकृतिय ) बंधक शक्तियिंद मोहितनागि, जीवात्मनु तानु सत्व, रज, तम ई प्रकृतिसंबंधवाद मूरु गुणगळिंद भिन्ननादाग्यू तन्नन्नु आ मूरू गुणगळुळ्ळ देहस्वरूपनेंदु तिळियुवनु.

ई यावत् आ बंधकशक्तियुळ्ळ प्रकृतियिंद कोडल्पट्ट अभिमानदिंद आदद्दु, अदरिंदले हुट्टीण, सायोण मुंताद अनर्थगळिगे जीवात्मनु नाने कर्तृनेंदु तिळियुवनु. आदकारण जीवात्मनिगे इंथ अज्ञानबंधनवन्नु श्रीहरिय भक्तिये अपरोक्षज्ञानवन्नु हुट्टिसि बिडिसुवदु, एंदु व्यासरु योचिसिदरु ॥ ५ ॥

**अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ॥ लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहितां ॥ ६ ॥**

ततः किमकरोदिति तत्राह अनर्थेति । तन्निवृत्तिसाधनमाहेति वा अनर्थेति । साक्षादाहेतीष्टानिष्टप्राप्तिपरिहारोपायमजानतो लोकस्य सात्विकप्रकृतेर्बंधकशक्तिनिमित्तमनर्थमुपशमयति-नाशयति इत्यनर्थोपशमं अधोक्षजे भक्तियोगं विद्वान् महत्वज्ञानपूर्वकप्रेमलक्षणभक्तियोगप्रदर्शनाय सात्वतसंहितां चक्र इत्येकान्वयः ॥ ६ ॥

मुंदे एनायितेंबदन्नु हेळुवरु अथवा अज्ञानबंधनवेंब संसारवु होगुवदक्के उपायवन्नु हेळुवरु—इष्ट प्राप्ति मत्तु अनिष्ट परिहार इवुगळ उपायवन्नु अरियद सात्विकस्वभाववुळ्ळ जनरिगे बंदिरुव बंधनद अनर्थवु नाशवागुवदक्के परमात्मनल्लि अवनु सर्वोत्तमनेंब ज्ञानदिंद हुट्टिद परम प्रेमवेंब भक्तिये मुख्यवादद्देंदु तोरिसुवदक्कागि परमात्मन माहात्म्येयन्नु हेळतक्क श्रीमद्भागवतवेंब ग्रंथवन्नु वेदव्यासरु रचिसिदरु. [१] ई श्लोकदल्लि ‘साक्षात्’ एंब पदवन्नु ‘भक्तियोग’ एंब पदक्के विशेषणवन्नु माडिरुवदरिंद अपरोक्षज्ञानवाद नंतर मुक्तिगे साधनवाद परमात्मन मुख्य प्रसादक्कू कूडा भक्तिये कारणवादद्देंदु तोरिसुवदु ॥ ६ ॥

**यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ॥ भक्तिरुत्पद्यते पुंसां शोक-मोह-भयापहा ॥ ७ ॥**

अनया कथं भक्तिरुत्पद्यत इति तत्राह यस्यामिति ॥ ७ ॥

ई भागवतग्रंथदिंद भक्तियु हेगे हुट्टुवदेंदरे हेळुवरु—याव श्रीमद्भागवतवन्नु केळलागि संसारसंबंधवाद शोकगळन्नू, नानु, नन्नदेंब ममतेयन्नू, भयगळन्नू नाशमाडोणदरिंद सर्वोत्तमनाद श्रीकृष्णनल्लि भक्तियु हुट्टुवदु ॥ ७ ॥

**स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजं ॥ शुकमध्यापयामास निवृत्तिनिरतं मुनिं ॥ ८ ॥**

अनुक्रम्य संशोध्य नत्ववद्यबुद्ध्या । निवृत्तिनिरतमित्यस्य फलाभिसंधिरहितमित्यर्थः ॥ ८ ॥

---

१ अपरोक्षज्ञानानंतरमपि जायमानपरमप्रसादसाधनभूतातिदृढभक्तियोगमपेक्ष्य साक्षादनर्थोपशममित्युक्तं ( यादुपत्य )

आ वदव्यासरु ई श्रीमद्भागवतवन्नु रचिसि, इदन्नु यारिगे हेळिदरे योग्यवादीतेंदु विचारमाडि, ई भागवतदल्लि हेळतक्क लक्षणगाळिगे तक्कवनाद, सकल विषयापेक्षेयन्नु बिट्टिरुव तम्म मक्कळाद श्रीशुकमहामुनिगळिगे अध्ययन ( नाल्कावर्ती हेळोण ) वन्नु माडिसिदरु ॥ ८ ॥

## शौनक उ०—स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः ॥ कस्य वा बृहतीमेतामात्मारामःसमभ्यसत् ॥९॥

अविद्वानिव शौनकश्चोदयति स वा इति । आत्मनि रमत इत्यात्मारामः मुनिः, सर्वज्ञो मौनी वा । अतएव सर्वत्र शिष्यसंग्रहणादावुपेक्षक उदासीनबुद्धिर्निवृत्तिनिरतः शुकः कस्य फलस्यार्थे बृहतीं-महतीमेतां समभ्यसद्वा इत्यन्वयः । चतुर्षु पुरुषार्थेषु कस्य पुरुषार्थस्येति विकल्पार्थो 'वा' शब्दः । शुक-गताविति धातोः परब्रह्मण्यव्याहतबुद्धिगतित्वाच्छुकः ॥ ९ ॥

अरियदवनंते शौनकनु प्रश्न माडुवनु—सर्वदा श्रीहरिय ध्यानदिंदले संतोषबडतक्क, सर्वज्ञनाद, अथवा मौनियाद, शिष्यसंग्रह मोदलाद केलसगळल्लि उदासीननागिरुव, सर्वपदार्थगळल्लियू परित्यागबुद्धियुळ्ळ आ शुकमुनियु याव फलद उद्देशवागि ई दोड्ड ग्रंथवन्नु अभ्यासमाडिदनु ? 'नाल्कु विध पुरुषार्थगळल्लि याव पुरुषार्थद उद्देशवागि' एंदादरू अर्थवु. शुकनेंदरे तप्पदंथ ब्रह्मज्ञानियु एंब अर्थवु ॥ ९ ॥

## सूत उवाच—आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे ॥ कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥१०॥

परिहरतीत्याह आत्मारामा इति । 'च' शब्दोप्यर्थे । आत्मारामाः-स्वरूपसुख एव रममाणा अप्यतएव निर्ग्रंथाः-निरुपाद्येयाः मुनयः उत्तमाधिकारिणः उरुक्रमे-उरवः क्रमाः-पादविक्षेपाः यस्य स तथा तस्मिन् अहैतुकीं-प्रयोजनविधुरामानंदरूपां भक्तिं कुर्वंति, किं पुनर्बहुजन्मस्व परोक्षितपरस्त्वाः ये भक्त्यादिसाधनातिशयेन मुक्तावानंदातिशयमाकांक्षमाणाः शुकादयः उरुक्रमे भक्तिं कुर्वंतीति किं वर्णनीयमित्येकान्वयः । इत्थंभूतगुणः निरपेक्षमुक्तमनोवशीकरणक्षमः किमुतामुक्तमनोवशीकरणक्षमगुण इति वाच्यमिति भावः ॥ १० ॥

सूतनु शौनकरिगे उत्तरवन्नु हेळुवनु—स्वरूपसुखदल्लि आनंदपडतक्कवरादाग्यू एरडने पदार्थवन्नु तेगेदुकोळ्ळदेयिद्द, उत्तमाधिकारिगळाद महामुनिगळु दोड्ड हेजियन्निडतक्क अंदरे ओंदु लोकदिंद एरडने लोकक्के हेजियन्निडतक्क अथवा महापराक्रमियाद परमात्मनल्लि एरडने प्रयोजनविल्लद परमानंदरूपवाद भक्तियन्नु माडुवरु.

अंथाद्दु बहुजन्मगळल्लि परमात्मन अपरोक्षवुळ्ळ शुकमुनिगळे मोदलादवरु अत्यंत भक्ति मुंताद विशेषसाहित्यगळिंद मुक्तियल्लि तमगे क्लृप्तवाद आनंदद कितलू हेच्चिन आनंदवु अपेक्षिसुवदरिंद परमात्मनल्लि भक्तियन्नु माडुवरेंदु एनु हेळतक्कद्दु. 'इत्थंभूतगुणो हरिः' अपेक्षाशून्यराद मुक्तर मनःसन्नु सह तन्नल्लि वलिमेयन्नु माडिकोळ्ळुव शक्तियुळ्ळवनु श्रीहरियु, अंदमेले अमुक्तरु श्रीहरियन्नु भजनमाडुवदु एनु आश्चर्यवु. ॥ १० ॥

## हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः ॥ अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियं ॥ ११ ॥

अतः शुकेन भागवताभ्यसनं कृतमित्याह हरेरिति । हरेरतिशयज्ञानानंदादिगुणैराक्षिप्ता-आकृष्टा मतिर्यस्य स तथोक्तः । बादरायणसुतो भगवान् नित्यं भागवतजनहृदयंगमं महदाख्यानं आख्यायते भगवन्महिमाऽनेनेत्याख्यानं । भागवतपुराणमध्यगादन्यांश्चाख्यापयामास चेत्येकान्वयः ॥ ११ ॥

आदकारण ( आनंदद बुद्देशवागि ) शुकाचार्यरु श्रीमद्भागवतवन्नु अभ्यासमाडिदरेंदु हेळुवरु—श्रीहरिय ज्ञान, आनंद मुंताद गुणगळिंद आकर्षण माडल्पट्ट ( एळेयल्पट्ट ) बुद्धियुळ्ळ बादरायण पुत्रराद श्रीशुकाचार्यरु परमात्मन माहात्म्येयन्नु वर्णनमाडतक्क भक्तजनर मनःसिगे आनंदवन्नु कोडतक्क श्रीमद्भागवत पुराणवन्नु तावु अध्ययनमाडि एरडनेयवरिगे अध्ययन माडिसिदरु ॥ ११ ॥

## परीक्षितोथ राजर्षेर्जन्म-कर्मविलापनं ॥ संस्थां च पांडुपुत्राणां वक्ष्ये कृष्णकथोदयां ॥ १२ ॥

कस्मिन्युग इत्यादिशौनकप्रश्नं परित्यज्य तस्य जन्मेति प्रश्नं परिहरतीत्याह परीक्षित इति । अथ परीक्षितो राजर्षेर्जन्म-कर्मविलापनं मरणं वक्ष्ये । तदर्थं प्रथमतः पांडुपुत्राणां संस्थां स्वर्गारोहणं युद्धादुपरितनमहाभिषेकादिमहाप्रस्थानांतां संस्थां-स्थितिं च वक्ष्ये । कीदृशीं संस्थां कृष्णकथाया उदयो यस्यां सा तथोक्ता तां ॥ १२ ॥

ई कथेयु याव युगदल्लि जरिगितेंदु शौनकन प्रश्नके उत्तरवन्नु हेळुत्त आ परीक्षिद्राजन उत्पात्तियु बहळ आश्चर्यकरवादद्देंब प्रश्नकू सूतनु उत्तरवन्नु हेळुवनु—इन्नुमेले श्रीकृष्णन कथेयन्नु हेळुवदके कारणवाद परीक्षिद्राजन उत्पत्तियन्नू अवनु माडिद पराक्रमगळन्नू अवन मरणसंगतियन्नू हेळुवेनु. आ कथेगे कारणवाद पांडुकुमारकर युद्धानंतरदल्लि नडेद महाभिषेक मुंताद संगतिगळन्नू मत्तु अवर स्वर्गारोहणसंगतियन्नू हेळुवेनु ( एंदु सूतनु हेळुवनु ) ॥ १२ ॥

---

१ परमात्मन गुणगळन्नु ध्यानमाडुवदरिंद ई शुकाचार्यर मनःसु परमात्मनन्ने अपेक्षिसुत्तित्तु.

यदा मृधे कौरव-सृंजयानां वीरेष्वथो वीरगतिं गतेषु ॥ वृकोदराविद्धगदाभिमर्शभग्नोरुदंडे धृतराष्ट्रपुत्रे ॥१३॥

अथो कथांतरं निरूप्यते यदेति । कौरव-पांडवानां मृधे-युद्धे भीष्मादिषु वीरेषु वीरगतिं-स्वर्गं गतेषु, धृतराष्ट्रपुत्रे दुर्योधने वृकोदरेणाविद्धाया-भ्रामितायाः गदाया अभिमर्शेन-सम्यक् ताडनेन भग्न ऊरुदंडो यस्य स तथोक्तः । तस्मिन् सति दुर्योधनपातमारभ्य ॥ १३ ॥

इन्नु पांडवर कथेयु प्रारंभवागुवदु—यावाग्गे कुरुपांडवर युद्धदल्लि भीष्म, द्रोण मोदलाद वीररु स्वर्गगतियन्नु होंदलु, भीमसेनन भयंकरवाद गदा ताडनेयिंद मुरियल्पट्ट तोडेगळुळ्ळ दुर्योधननु नष्टनागुत्तिरलु ( मरणोन्मुखनागुत्तिरलु ) ॥ १३ ॥

भर्तुः प्रियं द्रौणिरितिस्म पश्यन्कृष्णासुतानां स्वपतां शिरांसि ॥ अपाहरद्विप्रियमेव तस्य जुगुप्सितं कर्म विगर्हयंती ॥ १४ ॥

भर्तुः-स्वस्वामिनो दुर्योधनस्य मया प्रियं कार्यमिति स्म पश्यन्निरूपयन् द्रौणिर्यदा स्वपतां-निद्रां कुर्वतां कृष्णासुतानां-द्रौपदीपुत्राणां शिरांस्यपाहरत्तदा ॥ १४ ॥

तन्न यजमाननाद दुर्योधननिगे प्रीतियन्नु माडबेकेंदु द्रोणपुत्रनाद अश्वत्थामनु रात्रिकालके बिडारदल्लि मलिगिकोंडिरुव द्रौपदी पुत्रर शिरस्सन्नु अपहार माडिदनो. 'ई कार्यवु अश्वत्थामनिगे निंद्यवादद्दु' ॥ १४ ॥

माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना ॥ यदा रुदद्वाष्पकलाकुलाक्षी तां सांत्वयन्नाह किरीटमाली[1] ॥ १५ ॥

सुतानां माता-द्रौपदी शिशूनां-सुतानां निधनं निशम्य, घोरं यथा भवति तथा परितप्यमाना निधनं विश्रंभणं वा तस्य द्रौणेर्जुगुप्सितं-निंदितं एतच्छिशुनिधनाख्यं कर्म विगर्हयंती अरुददित्येकान्वयः । कीदृशं कर्म द्रौणेरेव विप्रियं नतु दुर्योधनस्य भारते स्वाभिषेकादिनाऽप्रियत्वोक्तेः । इदानीं द्रौणिना शिश्वादिवधात्पूर्वदृष्टं स्वप्नमाह तामिति । किरीटमाली-अर्जुनः सांत्वयन्-दुःखं शमयन् तां द्रौपदीमाह ॥ १५ ॥

१ किरीटमाले अस्य स्त इति ( यादुपत्य ).

आ कालदल्लि तायियाद द्रौपदियु सण्ण मक्कळन्नु कोंद संगतियन्नु केळि, बहुदुःखपट्टु, अश्वत्थामनु ई कार्यवन्नु माडतक्कद्लेंदु अवनन्नु निंदिसुत्त बहु रोदनेयन्नु माडलारंभिसिदळु. हागू दुर्योधनर्निद मळ्लुगळिंद अभिषेक माडिसिकोंडद्दु अश्वत्थामनिगे बहळ अगौरववेंदळु. अश्वत्थामन स्वप्नसंगतियन्नु हेळवरु–आ रोदनमाडतक्क द्रौपदियन्नु किरीटमाली किरीटवू वनमालेयू ई एरडन्नू धरिसिद अर्जुननु आ दुःखबडतक्क द्रौपदियन्नु समाधानमाडुत्त ई प्रकार नुडिदनु ॥ १५ ॥

**तन्मा शुचस्ते प्रमृजामि भद्रे यद्ब्रह्मबंधोः शिर आततायिनः ॥ गांडीवमुक्तैर्विशिखैरुपाहरे त्वाक्रम्य यत्स्नास्यसि नेत्रजैर्जलैः ॥ १६ ॥**

गांडीवनिःसृतैर्विशिखैः-विविधशिखैः, शरीरं खनित्वा विशंतीति वा, शरैराततायिनः-हनिष्यन्मरिष्यामीति क्रूरक्रियाकारिणः ब्रह्मबंधोर्ब्राह्मणाधमस्य द्रौणेः शिर उपाहरे-छेत्स्यामि । त्वं तच्छिरः पुरतः स्थितं पदाक्रम्य पुत्रवधदुःखनिमित्तनयनजातैर्जलैः स्नास्यसि-स्नानं करिष्यसीति यस्मात्तस्मात् हे भद्रे, मा शुचः-शोचनं माकुरु । अश्रु पाणिना निरुजन् हेभद्रे, मारुदेत्यसांत्वयदित्यन्वयः । शुचो नैवेति वा । ' अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्र-दारहरश्चैव षडेते ह्याततायिन ' इति । ' आततायिनमायांतं हन्यादेवाविचारयन् ' इति स्मृतेः ॥ १६ ॥

अर्जुननु–एलै मंगळकरळाद द्रौपदिये, नीनु यावदके रोदनमाडुवियो अदके कारणनाद, जनरन्नु कोंदु नानु सायुवेनेंदु क्रूरकेलसवन्नु माडतक्क, ब्राह्मणाधमनाद अश्वत्थामन शिरःसन्नु ई नन्न गांडीवधनुस्सिनिंद बिडल्पट्ट अनेक तुदिगळुळ्ळ, शत्रुगळ शरीरवन्नु शीळि प्रवेशमाडतक्क बाणगळिंद कत्तरिसि तंदु, निन्न एदुरिगे इडुवेनु. आगे नीनु आ शिरःसन्नु कालिनिंदोद्दु निन्न दुःखदिंद बरतक्क कण्णीरुगळिंद अदन्नु स्नानमाडिसुवियंते, आद्दरिंद ईगे रोदनवन्नु माडबेड, एंदु हेळुत्त अवळ कण्णीरन्नु तन्न कैयिंद वरिसि समाधानमाडिदनु. **आततायी** मनेगे बेंकियन्नु हच्चुववनु, विषवन्नु हाकुववनु, कोल्लुवदके शस्त्रपाणियादवनु, द्रव्यवन्नु अपहारमाडिदवनु, भूमियन्नु अपहारमाडिदवनु मत्तु हेंडतियन्नु अपहारमाडिदवनु. ई आरु प्रकारद जनरु ' **आततायी** ' एंदेनिसुवरु. ' इंथ आततायियु एदुरागिबंदरे अवनन्नु कोल्ललेबेकु ' एंदु स्मृतियल्लि हेळिद्दरिंद ई अश्वत्थामनन्नु कोल्लुवदके बाधकविल्ल. ॥ १६ ॥

---

१ इन्नु मुंदे ई ग्रंथदल्लि हेळतक्क संगतियु महाभारतके विरोधवागुवदु. याकेंदरे भारतदल्लि द्रौपदियन्नु समाधानमाडिद संगतियू, अश्वत्थामन शिरोरत्न हरणमाडिद संगतियू, भीमसेननिंदादंते वर्णिसिरुवरु, इल्लि अर्जुननिंदेंदु वर्णिसिरुवरु. आद्दरिंद भारतदल्लि हेळिद्दु निजवो, इल्लि हेळिद्दु निजवो एंदु संदेह बंदल्लि, **श्रीमदाचार्यरु** ई भागवतदल्लि हेळिद्दु अश्वत्थामन स्वप्नदल्लि जरिगिद वृत्तांतवेंदु ग्रंथांतरसम्मतियन्नु हेळि सरिमाडिरुवरु.

**इति प्रियां वल्गु-विचित्रजल्पैः स सांत्वयित्वाऽच्युतमित्रसूतः ॥ अभ्यद्रवद्दंशित उग्रधन्वा कपिध्वजो गुरुपुत्रं रथेन ॥ १७ ॥**

सं कपिध्वज इति । वल्गवो मनोहराः विचित्रा-विविधाश्चर्यभूता जल्पा-वाग्विशेषा ये ते तथोक्ताः, तैः प्रियां-भार्यां सांत्वयित्वा रथेन गुरुपुत्रमभ्यद्रवदित्यन्वयः । अच्युत एव मित्रमनिमित्तबंधुः सूतो-यंता यस्य स तथोक्तः । दंशितः-कवचितः । उग्रं-भयंकरं धन्वा यस्य स तथोक्तः ॥ १७ ॥

ई प्रकार कपिध्वजनाद अर्जुननु विचित्रवाद, मनोहरवाद मत्तु आश्चर्यकरवाद मातुगळिंद परमप्रियकरळाद भार्यळन्नु ( हेंडतियन्नु ) समाधानमाडि, अनिमित्त-बंधुवाद मत्तु अत्यंत मित्रनाद, तन्न सारथियाद श्रीकृष्णनिंद सहितनागि रथदल्लि कुळितुकोंडु गुरुपुत्रनन्नु धाविसिदनु. ॥ १७ ॥

**तमापतंतं स विलोक्य दूरात्कुमारहोद्विग्नमना रथेन ॥ पराद्रवत्प्राणपरीप्सुरुर्व्यां यावद्गमं रुद्रभयाद्यथार्किः ॥ १८ ॥**

कुमारहा-कुमारान् हतवान् द्रौणिरुर्व्यां भूमौ यावद्गमं-गंतुं शक्यं तावद्रथेन पराद्रवदित्यन्वयः । किं कृत्वा आपतंतं तमर्जुनं दूराद्विलोक्य उद्विग्नमनाः-संभ्रांतचेताः प्राणपरीप्सुर्जीवनलाभेप्सुः । क इव रुद्रस्य भयात् आर्किरर्कपुत्रः शनैश्चरः । पुरा यथा रुद्रस्य तृतीयनेत्रस्य तेजसोभयादार्किः परिधावति तथेति वायुपुराणांतरप्रसिद्धमिदं । यथा क इति केचित् पठंति । ब्रह्मपंचमशिरश्छेदनाय प्रवृत्तं रुद्रं दृष्ट्वा ब्रह्मा परिधावतीत्येतदसुरजनमोहायेति ज्ञातव्यं ॥ १८ ॥

पूर्वदल्लि रुद्रनु मूरने कण्णु तेरेयुवदन्नु कंडु अंजिकोंडु हेगे शनैश्चरनु प्राणवुळिसिकोळ्ळबेकेंदु, तन्न शक्ति इद्दष्टु धाविसि ओडिहोदनो अदरंते ई सण्णहुडुगरन्नु कोंददरिंद यदियल्लि डवडविकेयुळ्ळ अश्वत्थामनु हिंदेबरतक्क कृष्णार्जुनर रथवन्नु दूरदिंद कंडु, भ्रांतचित्तनागि, तन्न प्राणवन्नु उळुहिसिकोळ्ळबेकेंदु भूमिय मेले रथदिंद ओडिदनु. ब्रह्मदेवन ऐदने शिरःस्सन्नु छेदनमाडुवदक्के बंदिरुव रुद्रनन्नु कंडु ब्रह्मनु हेगे ओडिहोदनो अदरंते. ' यथा कः ' एंदु पाठवन्नु कल्पने माडि हेळुव अर्थवु असुरजनमोहकवादद्दु ॥ १८ ॥

यदाऽशरणमात्मानमैक्षत श्रांतवाहनं ॥ अस्त्रं ब्रह्मशिरो मेन आत्मत्राणं द्विजात्मजः ॥ १९ ॥

अशरणं-पालकरहितं, आत्मत्राणं-आत्मानं त्रायत इति ब्रह्मशिरोनामास्त्रं ॥ १९ ॥

इष्टागुत्तिरलु तन्न वाहनवु श्रांतवागलु, तनगे इन्नु रक्षकरु तन्न होर्तु एरडनेयवरु यारू इल्लदंताद्दरिंद, तन्नन्नु रक्षणमाडबेकादरे ई वेळेयल्लि ब्रह्मास्त्रवे एंदु तिळिदनु ॥ १९ ॥

अथोपस्पृश्य सलिलं संदधेऽस्त्रं समाहितः ॥ अजानन्नपि संहारं प्राणकृच्छ्र उपस्थिते ॥ २० ॥

ब्रह्मास्त्रप्रयोग इतिकर्तव्यतामाह अथेति । अथ-ईक्षणानंतरमुपस्पृश्य-आचम्य, संहारं-उपसंहारं । ' अपि ' शब्देन विद्याया असंकल्पं दर्शयति । तर्हि किमर्थं संदध इति तत्राह प्राणेति ॥ २० ॥

ब्रह्मास्त्रदिंद एनु माडिदनेंदरे हेळुवरु—आ नंतर अश्वत्थामनु पादप्रक्षालनेयन्नु माडिकोंडु आचमनमाडि, तनगे आ ब्रह्मास्त्रद तिरिगिसिकोळ्ळुव मंत्रवु बारदागू प्राणहोगुव संकटवु बंदद्दरिंद अर्जुनन मेले एकाग्रचित्तनागि ब्रह्मास्त्रवन्ननुसंधानमाडिदनु ॥ २० ॥

ततः प्रादुष्कृतं तेजः प्रचंडं सर्वतोदिशं ॥ प्रापतत्तदभिप्रेक्ष्य विष्णुं जिष्णुरुवाच ह ॥ २१ ॥

ततस्तस्मादस्त्रादुत्पन्नं सर्वतोदिशं प्रापतव्याप्नुवत्प्रचंडं, अभिप्रेक्ष्य-दृष्ट्वा जिष्णुः-अर्जुनः । हेत्यनेन मनस्याश्चर्यं कृत्वेति दर्शयति ॥ २१ ॥

आ अश्वत्थामन ब्रह्मास्त्रदिंद सकल दिक्कुगळन्नु व्यापिसि अति क्रूरवागि बरतक्क तेजःसन्नु कंडु, अर्जुननु मनःसिनल्लि आश्चर्यपट्टु, श्रीकृष्णनन्नु केळिदनु ॥ २१ ॥

अर्जुन उवाच—कृष्ण कृष्ण महाभाग भक्तानामभयंकर ॥ त्वमेको दह्यमानानामपवर्गोऽसि संसृतेः ॥२२॥

कृष्ण-सदानंदात्मक, कृष्ण-दुःखकर्षणशील, संसृतेर्जातेन तापाग्निना दह्यमानानां पुंसां त्वमेक एव संसृतेरपवर्गोऽसि-दुःखनाशकरोऽसीत्यन्वयः ॥ २२ ॥

( अर्जुननु अंदहु ) सदा आनंद-ज्ञानात्मकनाद, प्रळयकालदल्लि एल्ल जगत्तन्नु एळकोळ्ळतक्क हेक्कण्णने ( आदरदिंद एरडावर्ति ), संसारदल्लि तापबडतक्क जनगळिगे सुखवन्नु कोडुववनु नीनोब्बने, आद्दरिंद नीनु महाभाग्यशालिनु. निन्न भक्तरिगे अभयदायकनु ॥ २२ ॥

## त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ॥ मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥२३ ॥

अनिष्टपरिहारसामर्थ्यं तवास्तीत्याह त्वमिति । पापानि औषददहदिति पुरुषः, 'सर्वान् पाप्मन औषत् तस्मात्पुरुष' इति श्रुतेः । पुरु-बहु सरतीति वा । सर्वेषामादौ भवनादाद्यः साक्षादीश्वरः निरुपमचरितैश्वर्योपेतः । तत्कथमिति तत्राह प्रकृतेरिति । चित्प्रकृतेरप्युत्तमः । एवंविधस्त्वं चिच्छक्त्या-स्वरूपज्ञानशक्त्या मायां-बंधकशक्तिं निरस्य कैवल्ये-प्रकृति-प्राकृतबंधरहिते आत्मनि-स्वरूपे स्थितो यतोत इत्यन्वयः । स भगवान् कस्मिन् प्रतिष्ठित इति । 'स्वे महिम्नि' इति श्रुतेः ॥ २३ ॥

अनिष्टपरिहारमाडतक्क सामर्थ्यवु निनगे उंटेंदु हेळवनु–' सकलपापगळिगे औषधरूपनाद्दरिंद पुरुषनेन्नुवरु ' एंब श्रुतियल्लि हेळिदंते पापनाशकनाद्दरिंद अथवा बहु सुखवन्नु कोडतक्कवनाद्दरिंद पुरुषनेनिसिकोंड, एल्ल जनरन्नु सृष्टिमाडतक्कवनाद्दरिंद एल्लरिगू मोदलनेयवनेनिसिकोंड, उपचारविल्लदे अत्यंत ऐश्वर्यवंतनाद्दरिंद ईश्वरनेनिसिकोंड, चित्प्रकृतिय किंतलू उत्तमनाद नीनु निन्न ज्ञानस्वरूपशक्तियिंद बंधनशून्यनाद 'परमात्मनु यातरल्लिरुवनेंदरे तन्न स्वरूपसुखदल्लि' एंब श्रुतियंते निन्न स्वरूपसुखदल्लिरतक्कवनु ॥ २३ ॥

## स एष जीवलोकस्य मायामोहितचेतसः ॥ विधित्सुः स्वेन वीर्येण श्रेयो धर्मादिलक्षणं ॥ २४ ॥

स प्रकृति-प्राकृतसंबंधरहित एव बंधकशक्त्या मोहितबुद्धेर्जीवलोकस्य स्वरूपवीर्येण धर्मादिलक्षणश्रेयो विधित्सुरवतरतीत्यन्वयः ॥ २४ ॥

आ प्रकृति मत्तु प्रकृतियिंदागतक्क केलसगळ संबंधविल्लद जीवनु निंन इच्छाबलदिंद अदे प्रकृतिसंबंधदिंद मोहितबुद्धियुळ्ळ संसारदल्लिरतक्क जीवसमूहके निन्न स्वरूपशक्तियिंद धर्म मोदलाद श्रेयःसन्नु कोडुवदक्के अवतारवन्नु माडिरुवि ॥ २४ ॥

## यथायं चावतारस्ते भुवो भारजिहीर्षया ॥ स्वानां चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥

भगवदवतारास्ते यथा पुंसामनुध्यानादिना मोक्षहेतवस्तथा भुवो भारजिहीर्षया कृतोयं चावतारश्चानन्यभक्तानां स्वानामसकृदनुध्यानाय स्यादित्यतो मोक्षं साधयतस्तव भक्तैहिकदुःखनिवारकत्वं किं वर्णनीयमिति भावः । भूभारानुध्यानयोः समुच्चये 'च' शब्दः ॥ २५ ॥

परमात्मन अवतारगळु हेगे जनगळिगे ध्यान, श्रवण मुंतादवुगळिंद मोक्ष कोडुवदके कारणवागुत्तवो, अदरंते भूभारवन्निळिसुवदकागि माडिद ई निन्न अवतारदिंदादरू निन्न होर्तु एरडनेयवरन्नु भजिसदे, केवल निन्नन्ने भजनेमाडतक्क निन्नवराद नंमगळिगे निंन ध्यानवन्नु कोट्टु मोक्षवन्नु साधनमाडिकोडतक्क भक्तियन्नु नम्मल्लि हुट्टिसुवदरिंद ई संसारसंबंधद दुःखनिवारणवु आगुवदेंदु एनु वर्णिसतक्कद्दु ! ई श्लोकदल्लिय 'च' शब्दवु भूभारवन्नु हरणमाडुवदक्कू, ज्ञान-भाक्तियन्नु कोडुवदक्कू ई अवतारवु समर्थवादद्देंदु तोरिसुवदु ॥ २५ ॥

## किमिदं स्वित्कुतो वेति देवदेव नवेद्म्यहं ॥ सर्वतो मुखमायाति तेजः परमदारुणं ॥ २६ ॥

यत्तेजः परमदारुणं सर्वतोमुखमायाति । हे देव, तदिदं किं स्वित् कुतोवेति अहं न वेद्मीत्यन्वयः ॥ २६ ॥

ई एदुरिगे बरतक्क अत्यंत दारुणवाद एल्लदिक्किनिंदलू बरतक्क तेजःसु यावदु मत्तु एल्लीदु एंबदु एलै देवतिगळिगे श्रेष्ठनाद श्रीकृष्णने, ननगे तिळियदु ॥ २६ ॥

## श्रीभगवानुवाच—वेथ्थेदं द्रोणपुत्रस्य ब्राह्ममस्त्रं प्रदर्शितं ॥ नैवासौ वेद संहारं प्राणबाध उपस्थिते॥२७॥

यत्तेजः तदिदं द्रोणपुत्रस्य ब्राह्ममस्त्रं वेत्थेत्यन्वयः । कीदृशं प्राणबाधे-जीवाधिष्ठितदेहनाशे, उपस्थिते-आसन्नेसति प्रदर्शितं । प्राणबाध इत्येतत्कुतो वाऽवगतं इति तत्राह नेति । असौ द्रौणिः अस्य अस्त्रस्य संहारं न वेदेति यस्मादतो ज्ञायते प्राणबाधे मुक्तमिति ॥ २७ ॥

( श्रीकृष्णनु अंदद्दु ) एलै अर्जुनने, ई यदुरिगे बरतक्क तेजःसु तन्न प्राण होगतक्क समय बंदितेंदु अत्यंतावस्थावस्थेयिंद तनगे तिरिगि तकोळ्ळतक्क मंत्रवु बारदिद्दरू अश्वथ्थामनिंद बिडल्पट्ट ब्रह्मास्त्रविरुवदु. इवनु उपसंहरमंत्रवन्नु अरियदवनादाग्यू ई ब्रह्मास्त्रवन्नु बिट्टिरुवनष्टे, आद्दरिंदले इवनिगे प्राणबाधेयु बंदिरुवदेंदु निश्चितवागुवदु ॥ २७ ॥

## नत्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्षणं ॥ जत्यस्त्रतेज उन्नद्धमस्त्रज्ञो त्यस्त्रतेजसा ॥ २८ ॥

अस्त्राणामन्यतमं किंचिदस्त्रमस्य प्रत्यवकर्षणं-प्रतीकारसमर्थं निवर्तकं नहि । अतोऽस्त्रज्ञः-विसर्गोपसंहारपूर्वकमस्त्रज्ञस्त्वमस्त्रतेजसा उन्नद्धमुद्धतमस्त्रतेजः जहीत्यन्वयः । 'हि' शब्दो हेतौ ॥ २८ ॥

ई अस्त्रवन्नु शांति माडुवदक्के एरडने याव अस्त्रवू इल. आदरिंद नीनु ई ब्रह्मास्त्रद उपसंहर ( तिरिगि तक्कोळ्ळतक्क ) मंत्रवन्नु बल्लवनादरिंद ई प्रकाशमंतवाद अस्त्रवन्नु अदे ब्रह्मास्त्र प्रयोगदिंदले जयिसु ॥ २८ ॥

**सूत उवाच—श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा ॥ स्पृष्ट्वापस्तं परिक्रम्य ब्राह्मं ब्राह्माय संदधे ॥२९॥**

परेषां शत्रूणां संबंधिनो वीरान् हंतीति परवीरहा शत्रुवीरानिति वा । तं कृष्णं परिक्रम्य-प्रदक्षिणीकृत्य ॥ २९ ॥

( सूतनु अंदद्दु ) श्रीकृष्णन वाक्यवन्नु केळि, वीरराद तन्न शत्रुगळन्नु कोल्लतक्क अर्जुननु आचमन माडि, श्रीकृष्णनिगे प्रदक्षिणेयन्नु माडि आ ब्रह्मास्त्रशांतिगागि प्रति ब्रह्मास्त्रवन्नु प्रयोग माडिदनु ॥ २९ ॥

**संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते ॥ आवृत्य रोदसी खं च ववृधातेऽर्क-वह्निवत् ॥ ३० ॥**

उभयोः शरसंवृते तेजसी अन्योन्यं संहत्य-संघट्टनं कृत्वा रोदसी-द्यावापृथिव्यौ खमाकाशं चावृत्यार्क-वन्हिवत् ववृधाते इत्यन्वयः ॥ ३० ॥

आ नंतरा अर्जुनन मत्तु अश्वथ्थामन ( इवरिब्बर ) ब्रह्मास्त्रगळू परस्परवागि शेरिकोंडु अत्यंत तेजस्सिनिंद भूलोकवू, आकाशवू मुच्चिकोंडु, प्रलयकालद अग्नियू मेले सूर्यनू इवरिब्बर तेजस्सिनिंद हेगे भयंकरवागुवदो अदरंते इवादरू तोरिदवु ॥ ३० ॥

**दृष्ट्वास्त्रतेजस्तु तयोस्त्रींल्लोकान्प्रदहन्महत् ॥ दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत ॥ ३१ ॥**

सांवर्तकं प्रलयकालीनदाहं, अमंसत-न्यरूपयन् ॥ ३१ ॥

आगिन कालक्के यावत्तू जनरु ई एरडू अस्त्रगळ तेजस्सिनिंद तप्तरागि, इदु मूरु लोकवन्नु सुडतक्क प्रलयकालद अग्निये बंदितेंदु तिळिदरु ॥ ३१ ॥

**प्रजोपप्लवमालक्ष्य लोकव्यतिकरं च तं ॥ मतं च वासुदेवस्य संजहारार्जुनो द्वयं ॥ ३२ ॥**

व्यतिकरो-नाशः, अस्त्रोपसंहारलक्षणं वासुदेवमतं ॥ ३२ ॥

आ कालक्के अर्जुननु ई एरडू अस्त्रगळिंद प्रजवु नाशवागुवदेंदु आ जनर संकटवन्नु बिडिसुवदन्नु योचिसि, हागू श्रीकृष्णन मनोभिप्रायवन्नु तिळिदु, आ एरडू अस्त्रगळन्नू शांतमाडिदनु ॥ ३२ ॥

तत आसाद्य तरसा दारुणं गौतमीसुतं ॥ बबंधामर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥

गौतमीसुतं-कृपीपुत्रं । रशनया-रज्ज्वा ॥ ३३ ॥

आकूडले रूक्षनाद, गौतमवंशदल्लि उत्पन्नळाद कृपिएंबवळ पुत्रनाद अश्वत्थामनन्नु रोषदिंद कण्णु केंपगेमाडिकोंडु अर्जुननु हग्गदिंद पशुगळन्नु कट्टिदंते कट्टिदनु ॥ ३३ ॥

शिंबिराय निनीषंतं रज्ज्वा बध्वा रिपुं बलात् ॥ प्राहार्जुनं प्रकुपितो भगवानंबुजेक्षणः ॥ ३४ ॥

शिविराय-स्कंधा वाराय-सेनानिवेशनस्थानायेतियावत् । निनीषंतं-नेतुमिच्छंतं ॥ ३४ ॥

ई प्रकार हग्गदिंद बिगिदु, बलात्कारदिंद तावु इळिदिरुव बिडारक्के ई शत्रुविनन्नु ओय्युवागे, कमलदंते नेत्रवुळ्ळ श्रीकृष्णनु शिट्टिगेद्दु अर्जुननन्नु कुरितु ई प्रकार अंदनु ॥ ३४ ॥

मैनं पार्थार्हसि त्रातुं ब्रह्मबंधुमिमं जहि ॥ योसावनागसः सुप्तानवधीन्निशि बालकान् ॥ ३५ ॥

हेपार्थ, ब्रह्मबंधुं-ब्राह्मणाधममेनमश्वत्थामानं त्रातुं नार्हसि । किंतु योसौ निशि-रात्रौ सुप्तान् बालकान् अवधीदितीमं जहि-हनेत्यन्वयः । अनागसः-अकृतापराधान् । तत्राश्वत्थाम्नो वध्यत्वे अनागस्त्वं, सुप्तत्वं, बालकत्वमिति हेतुत्रयमनादृत्य तद्धननकारणमिति ज्ञातव्यं । 'अनागसं प्रसुप्तं च बालकं हंति यो नरः । स खंडशो निशातव्य इत्येवं मनुरब्रवीत्' इति स्मृतेः ॥ ३५ ॥

एलै अर्जुनने, ई ब्राह्मणाधमनाद अश्वत्थामनन्नु उळिसबेड ( अथवा संरक्षिसबेड ), याकंदरे निरपराधिगळाद, रात्रियल्लि मलगिरुव मक्कळन्नु इवनु कोंदिरुवनु. 'निरपराधिगळन्नू, बालकरन्नू, मलगिदवरन्नू यावनु कोल्लुवनो अवनन्नु तुंड तुंड माडि कडिदु हाकबेकु' हीगे मनुस्मृतियु इरुवदु. आद्दरिंद इवनन्नु बिडगूडदु ॥ ३५ ॥

मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडं ॥ प्रपन्नं विरथं भीतं न रिपुं हंति धर्मवित् ॥ ३६ ॥

रिपुणा नैते हंतव्या इत्याह मत्तमिति । मत्तं-मद्यादिपानेन मदांधं, प्रमत्तं-विस्मृतिमंतं, उन्मत्तं-ग्रहग्रस्तं, सुप्तंनिद्रितं, बालं-विशेषानभिज्ञं, स्त्रियं-बाल्ये तारुण्ये वार्धके च पराधीनवृत्तिं, जडं-स्वतो विवेकज्ञानशून्यं, प्रपन्नं-शरणागतं, विरथं-रथादिसाधनरहितं, विपथं-युद्धमार्गादपक्रांतमिति केचित् पठित्वा व्याचक्षते तद्वय-चलनयोरिति धातोः भीतं-चलितं युद्धमार्गादपसृतमित्यनेन पुनरुक्त । नच कंपितार्थत्वं पाठविरोधादतोनुपासित-गुरुचरणैरुत्प्रेक्षितमित्युपेक्षणीयं ॥ ३६ ॥

शत्रुवादाग्यू ई जनगळन्नु सर्वथा कोल्लबारदेंदु हेळुवरु–' मद्यपानदिंद मदांधनादवनन्नू, मै मेले एच्चरिकेयिल्लदवनन्नू, पिशाच मुंताद ग्रहगळिंद पीडित-नादवनन्नू, निद्रेयन्नु माडतक्कवनन्नू, दिक्कु देशगळन्नु अरियद बालकरन्नू मत्तु बाल्य, तारुण्य, वार्धिक्यगळल्लियू पराधीनस्वरूपराद स्त्रीयरन्नू, स्वतः विवेकज्ञानविल्लदवनन्नू, शरणागतरन्नू मत्तु युद्धदल्लि रथविल्लदवनन्नू तन्न शत्रुवादाग्यू कोलबारदु. ई श्लोकदल्लि ' विपथ ' एंब पाठवन्नु कल्पिसि, युद्धदिंद ओडिहोगतक्कवनेंब अर्थवन्नु कल्पिसुवदु सरियल्ल. ' भीतं ' एंब पददिंदले ई अर्थवु आगिरलु पुनः हेळिदरे पुनरुक्तियु आगुवदु. हीगे अर्थ हेळुवदु गुरुपादसेवेयन्नु माडदेयिद्द जनगळ अर्थवेंदु उपेक्षामाडतक्कद्दु ॥ ३६ ॥

## स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः ॥ तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥

खल-इंद्रियारामः, अघृणः-दयारहितः, तद्वधः-तस्य हिंसकस्य हननं श्रेयः-साधु, कुतः येषां हिंसादिदोषादधो-नरकं यातीति यस्मात्तस्मादिति ॥ ३७ ॥

याव राजन राज्यदल्लि एरडने जनरन्नु कोंदु तन्न उपजीवनवन्नु माडिकोळ्ळुवनो अंथ स्वेच्छयिंद इरतक्क दयविल्लद दुष्टनन्नु आ राजनु कोल्लुवदु बहळे श्रेयस्करवादद्दु. इल्लदिद्दरे आ दुरळनु माडिद पापदिंद राजनु ' राजा राष्ट्रकृतं पापं ' एंब उक्तिय प्रकार नरकक्के होगुवनु ॥ ३७ ॥

## प्रतिश्रुतं च भवता पांचाल्यै श्टण्वतो मम ॥ आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥

प्रतिज्ञा च रक्षणीयेत्याह प्रतिश्रुतमिति । हेमानिनि-मानार्हे, यस्ते-तव पुत्रान् हतवान् तस्य शिर आहरिष्य इति मम शृण्वतः सतः पांचाल्यै-द्रौपद्यै प्रतिज्ञातं च यस्मात्तस्मादित्यन्वयः ॥ ३८ ॥

इदल्लदे ( श्रीकृष्णनु ) अर्जुनने, नीनु माडिद प्रतिज्ञेयन्नु पालिसतक्कद्दु हेळुवनु—'एलै मानक्के योग्यळाद द्रौपदिये, यावनु निन्न मक्कळन्नु कोंदिरुवनो अवन शिरस्सन्नु तंदु कोडुवेनु ' एंदु ननगे केळुवंते द्रौपदियन्नु कुरितु प्रतिज्ञेयन्नु माडिरुवि ॥ ३८ ॥

**तदसौ वध्यतां पाप आततायात्मबंधुहा ॥ भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः ॥ ३९ ॥**

' आत्मबंधुः सुतः स्लोकः पुत्रोंगज उदाहृत ' इत्यभिधानादात्मबंधून्-सुतान् हतवानित्यन्वयः । तस्मादसौ पापः विप्रियं न तु लोकदृष्टचेति ज्ञातव्यं ॥ ३९ ॥

आद्दरिंद ई पापियाद, आततायियाद, निंन मक्कळन्नु कोंदिरुव, तन्न यजमाननाद दुर्योधननिगे प्रीतिबडिसिद मत्तु सत्कुलदलि नीचनागि उत्पन्ननाद ई अश्वत्थामनन्नु कोल्लतक्कद्दे सरि ॥ ३९ ॥

**सूत उवाच—एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ॥ नैच्छद्धंतुं गुरुसुतं यद्यप्यात्महनं महान् ॥४०॥**

हरिणाऽर्जुनं प्रति द्रौणिवधप्रतिपादनमर्जुनस्य धर्मपरीक्षणाभिप्रायमेव न तु वधाभिप्रायमिति कथनपूर्वकमर्जुनस्य भक्त्यतिशयं कथयति एवमिति । पार्थः गुरुसुतं हंतुं नैच्छदित्यन्वयः । कथंभूतः । यद्यप्येवं धर्मं परीक्षता कृष्णेन चोदितः तथापि नैच्छत् । कथंभूतं । आत्मानं हतवंतं । अयमपि कश्चिद्धेतुः । पुनरपि कथंभूतः । महान्-महापुरुषः महत्त्वान्नैच्छादिति भावः ॥ ४० ॥

( सूतनु शौनकरिगे हेळुवनु ) ई रीतियिंद अर्जुनन धर्मद मनस्सन्नु परीक्षिसुवदक्कागि अर्जुननु श्रीकृष्णनिंद हेळल्पट्टाग्यू गुरुपुत्रनु तन्नन्नु कोंदाग्यू अवनन्नु कोल्लुवदक्के बुद्धियन्नु माडलिल्ल. एष्टादरू अवनु दोड्डवनेंब बुद्धियन्ने माडिदनु ॥ ४० ॥

अथोपेत्य स्वशिबिरं गोविंदप्रियसारथिः ॥ न्यवेदयत्तं प्रियायै शोचंत्या आत्मजान् हतान् ॥ ४१ ॥

अथ गोविंदः प्रियश्च सारथिश्च यस्य स तथोक्तः । स पार्थः स्वशिबिरमुपेत्य द्रौणिना हतानात्मजान्-पुत्रान् प्रतिशोचंत्यै प्रियायै-द्रौपद्यै तं न्यवेदयदित्येकान्वयः ॥ ४१ ॥

आनंतर श्रीकृष्णने प्रिय सारथियाद अर्जुननु आ अश्वत्थामनन्नु एळकोंडु ( कट्टि तेगेदोय्दु ) पुत्रशोकदिंद रोदनमाडतक्क द्रौपदिगे अर्पिसिदनु ॥ ४१ ॥

तथाहृतं पशुवत्पाशबद्धमवाङ्मुखंकर्मजुगुप्सितेन ॥ निरीक्ष्य कृष्णापकृतं गुरोःसुतं वामस्वभावा कृपया ननाम ॥ ४२ ॥

वामस्वभावा-मृदुस्वभावा चारुतरशीलेति यावत् । कृष्णा तथाहृतं । तदेवाह, पशुत्वात्पाशेन बद्धं, कर्म-जुगुप्सितेन कर्मणा लज्जयाऽवाङ्मुखं, अपकृतं-पुत्रहत्ययाऽपकर्तारमपि गुरोः सुतं निरीक्ष्य कृपया ननामेत्येकान्वयः ॥ ४२ ॥

आप्रकार पशुविनंते हग्गदिंद कट्टिसिगोंडु तरल्पट्ट, केट्ट कार्यवन्नु माडिद्दरिंद मोरेयन्नु केळगे माडिद हागू तनगे अपकारवन्नु माडिद गुरुपुत्रनन्नु कंडु, अत्यंत कोमल स्वभाववुळ्ळ अथवा मनोहर स्वभाववुळ्ळ द्रौपदियु बहु अंतःकरणदिंद नमस्कार माडिदळु ॥ ४२ ॥

उवाच चासहंत्यस्य बंधनानयनं सती ॥ मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥

न केवलं नत्वा तुष्णीमभूत्किंतु वचनं चोवाचेत्याह उवाचेति । अस्य द्रौणेर्बंधनेनानयनं असहमाना सती-प्रशस्तसौशील्यादिगुणवती । ब्राह्मण एव वर्णानां गुरुः, अयं च नितरां युष्माकं गुरुः ॥ ४३ ॥

केवल नमस्कार मात्र माडि सुम्मनादळेंतल्ल, केलवु मातुगळन्नु आडिदळु—आ अश्वत्थामनन्नु कट्टि तंदद्दु सहनवागदे अत्यंत ओळ्ळे स्वभाववुळ्ळ द्रौपदियु एल्ल जातिगळिगू साधारणवागि ब्राह्मणनु गुरुवेनिसुवनु, अदरल्लियू निमगे इवनु विशेषवागि गुरुवु. इंथ ई अश्वत्थामनन्नु मोदलु बिच्चिरि बिच्चरि एंदळु ॥ ४३ ॥

**सरहस्यो धनुर्वेदः सविसर्गोपसंयमः ॥ अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥**

अतिशयितगुरुत्वमाह सरहस्येति । सरहस्यः-सकीलकः धनुर्वेदः, सविसर्गोपसंयमः-प्रयोगोपसंहारसहितः, अस्त्रग्रामः-ब्रह्माद्यस्त्रसमूहः, यस्य-द्रोणस्यानुग्रहात् भवता शिक्षितः-अभ्यस्तः ॥ ४४ ॥

अश्वत्थामनु विशेषवागि गुरुवेंबदन्नु विंगडिसि हेळुवल्लु–यार द्रोणाचार्यर परमानुग्रहदिंद धनुर्वेददलिरतक्क रहस्यसंगतिगळन्नू हागु प्रयोगमाडुवदक्कू तिरुगि शांतियन्नु माडुवदक्कू सहवागि ब्रह्मास्त्र मुंताद यावत्तू अस्त्रगळ समूहवु निम्मिंद अभ्यासमाडल्पट्टितु ॥ ४४ ॥

**स एष भगवान् द्रोणः प्रजारूपेण वर्तते ॥ तस्यात्मनोर्धं पत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥**

स एष द्रोणो भगवान् प्रजारूपेण ' आत्मा वै पुत्रनामासीः ' इति श्रुतेः । पुत्ररूपेण वर्तते । यतो गुरुपुत्रस्य गुरुवत्पूजार्हत्वादिति भावः । किं तु अन्योपि हेतुरस्तीत्याह तस्येति । तस्य-द्रोणस्यात्मनः शरीरस्यार्धं-अर्धांगी सती वीरसूः-वीरपुत्रवती कृपी संप्रत्यास्ते, पतिं नान्वगात्-अनुगमनं न कृतवती, यतोऽतो गुरुपत्नीभक्त्या च मुच्यतामिति भावः ॥ ४५ ॥

' तंदिये मगन स्वरूपनागिरुवनु ' एंब श्रुतियप्रकारवागि अदे द्रोणाचार्यरु मगन रूपदिंदिरुवरु हागू वीरपुत्रनन्नु पडेद आ द्रोणाचार्यर अर्धांगिनियाद कृपियु, सहगमन होगदे इन्नू इरुवळु; आद्दरिंद गुरुभक्तियिंदादरू इवनन्नु बिडतक्कद्दु ॥ ४५ ॥

**तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं ( कौरवं ) कुलं ॥ वृजिनं नार्हति प्राप्तुं पूज्यं वंद्यमभीक्ष्णशः ॥४६॥**

न केवलं गुरुभक्तिरेवात्र हेतुः, अन्योप्यस्तीत्याह तदिति । गुरौ गुरुपुत्रेषु वाऽऽचार-नमनलक्षणो यो धर्मः तं जानातीति धर्मज्ञः । हेधर्मज्ञ, भगानां-भाग्यानां समुदायो भागः, महान्भागो यस्य स तथा, तस्य संबुद्धिर्महाभाग, अश्वत्थाम्नो दुःखे सति तन्मातुरपि दुःखं स्यात्तेन

तत्कोपेनास्मत्कुलस्यापि पापं भवेदिति यस्मात्तस्मादभीक्ष्णशः-सर्वदा सर्वैःपूज्यं वंद्यं गौरवं ( कौरवं ) कुलं भवद्भिर्वृजिनं-पापं तन्निमित्तं दुःखं वा प्राप्तुं नार्हति-योग्यं नभवति ॥ ४६ ॥

ई विषयदलि गुरुभक्तियु ओंदे कारणवल्ल, इन्नु बेरेकारणवू उंटेंदु हेळुवळु--गुरुगळलियू, गुरुपुत्ररलियू नडिसतक्क नमस्कार मुंताद धर्मगळन्नु बल्ल, ऐश्वर्य समुदायगळुळ्ळ तम्मिंद अश्वत्थामनु दुःखबडलु, अवर तायिगे दुःखवागुवदु. अवर कोपदिंद नम्म कुलके पापघटनेयागुवदु. आद्दरिंद प्रतिक्षणशः पूजेगोंबुव, नमस्कार माडिसिकोळ्ळतक्क ( इंथ गुरुकुलवु ) अथवा कौरवर कुलवु इंथ पापवन्नु आपापनिमित्तवाद दुःखगळन्नु होंदुवदके योग्यवल्ल ॥ ४६ ॥

**मा रोदीदस्य जननी गौतमी पतिदेवता ॥ यथाहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥**

यथाश्रुमुखी मृतवत्सा-मृतपुत्रा अतएवार्ताहं मुहुरनिशं रोदिमि तथा पतिरेव देवता यस्याः सा तथा गौतमी-कृपी अस्याश्वत्थाम्नो जननी-माता मारोदीदित्येकान्वयः । तस्मादस्मत्कुलहिताय वा मुच्यतां, अयं गुरुपुत्र इत्यर्थः ॥ ४७ ॥

नानु हेगे मक्कळ मरण दुःखदिंद हगलू इरलू सहवागि पुनःपुनः रोदन माडुवेनो अदरंते इवनन्नु कोल्लुवदरिंद पतिये परदेवति एंदु पूजिसुव इवन तायियु रोदनमाडगूडदु ॥ ४७ ॥

**यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः ॥ तत्कुलं प्रदहत्याशु सानुबंधं शुचार्पितं ॥ ४८ ॥**

विपक्षे बाधकमाह यैरिति । अकृतात्मभिरशिक्षितबुद्धिभिर्यैराजन्यैर्ब्राह्मणकुलं कोपितं, तत्कुपितं शुचार्पितं-प्राप्तशोकं, सानुबंधं-समूलभूतं तेषां राज्ञां कुलं तत्क्षणमेव प्रदहतीत्यन्वयः ॥ ४८ ॥

ई हिंदे हेळिदंते माडदिद्दरे बाधकवुंटेंदु हेळुवळु-असिक्षितबुद्धियुळ्ळ याव राजरिंद ब्राह्मण कुलवु शिट्टिगे तरिसल्पडुवदो मत्तु शोकास्पदवागुवदो ( कण्णीरु तरिसुवरो ) आ राजर सहमूलवाद वंशवु आक्षणवे सुट्टुहोगुवदु ॥ ४८ ॥

१ 'कुल' एंदेन्नुवदरिंद ब्राह्मणमात्रके दुःख कोडगूडदु.

**सूत उवाच–धर्म्यं न्याय्यं सकरुणं निर्व्यलीकं समं महत् ॥ राजा धर्मसुतो राज्ञ्याः प्रत्यनंदद्वचो द्विजाः ॥ ४९ ॥**

धर्म्यं-धर्मादनपेतं, न्याय्यं-न्यायोपेतं, सकरुणं-दयासहितं, निर्व्यलीकं, समं-शत्रु-मित्रभावशून्यं सर्वशास्त्रानुसृतं वा । अर्थतो महत् ॥ ४९ ॥

सूतनु शौनकरन्नु कुरितु हेळुवनु–**धर्म्यं** धर्मवन्नु मीरदे इद्द ( द्रौपदियु ) मोदलु बिच्चरि बिच्चरि एंदु अंदद्दु **न्याय्यं** न्यायवन्नु मीरदे इद्दद्दु; रहस्यवाद धनुर्वेदवु याव द्रोणाचार्यरिंद अभ्यासमाडल्पट्टिरुवदु. मुंताद मातुगळु, **सकरुणं** ' आ ' द्रोणाचार्यर अर्धांगिनियु इरुवळु मुंताद करुणासहितवाद मातुगळु, **निर्व्यलीकं** तम्मंथ बल्लवरु हींगे माडबारदु, मुंताद मातुगळु, **समं** ' नन्नन्ते अश्वत्थामन तायियु दुःखबडबारदु ' मुन्तादमातुगळु. **महत्** ' यारिंद ब्राह्मणर कुलवु सिट्टिगेब्बिसल्पडुवदो ' मुंताद निष्ठुर मातुगळिंद हितोपदेश माडल्पट्टिरुवदु. ई प्रकारवाद द्रौपतिय मातुगळन्नु धर्मराजनु केळि, बहळ संतोषबट्टनु ॥ ४९ ॥

**नकुलः सहदेवश्च युयुधानो धनंजयः ॥ भगवान्देवकीपुत्रो येचान्ये या श्च योषिताः ॥ ५० ॥**

एते नकुलादयश्च प्रत्यनंदन् इत्याद्यात्द्दत्यान्वयः । युयुधानः-सात्यकिः, येचान्येनुजीविनः तेच याश्च स्त्रियः ताश्च ननंदुरिति भावः ॥ ५० ॥

ई प्रकारवागि धर्मराजनु आडिद मातन्नु केळि, नकुल, सहदेव, सात्यकि, अर्जुन मत्तु पूज्यनाद श्रीकृष्णनु इवरल्लदे मत्तू मिक्काद जनगळू हागु अल्लि इद्द यावत्तू स्त्रीयरुसहवागि बहु संतोषबट्टरु ॥ ५० ॥

**तत्राहामर्षितो भीमस्तस्य श्रेयान्वधः स्मृतः ॥ न भर्तुर्नात्मनश्चार्थे योऽहन्सुप्तान् शिशून्वृथा ॥ ५१ ॥**

तत्र तस्यामवस्थायाममर्षितो भीमः आहेत्यन्वयः । यो भर्तुर्दुर्योधनस्यात्मनः स्वस्य च नार्थे सुप्तान् शिशून् वृथाऽहन्-हतवान् । ' वृथा ' शब्दोऽवध्यविषयः, वध्यानामर्थे च न भवति । यस्य वधस्तस्यैव श्रेयान्स्मृतः, नास्माकं पापमिति भावः ॥ ५१ ॥

आ समयदल्लि ई धर्मराजन मातुगळन्नु सहिसदे भीमसेननु–एलै, ई अश्वत्थामनु तनगू तन्न यजमाननाद दुर्योधननिगू सह एनू प्रयोजनविल्लदे व्यर्थवागि रात्रियल्लि मलिगिद हुडुगरन्नु कोंदनष्टे, इवनु माडिद पापक्के इवनन्ने कोल्लतक्कद्दु श्रेयस्करवादद्दु. इदरिंद नमगेनू पापवु बरुवादिल्ल ॥ ५१ ॥

---

१ धर्मादनपेतं मुच्यतां मुच्यतामिति, न्याय्यं न्यायादनपेतं सरहस्यइत्यादि, सकरुणं तस्यात्मनोर्धमिति, निर्व्यलीकं तत्धर्मज्ञेति, समं मारोदीदिति दुःखे स्वसाम्योक्तेः, महत् यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् । ( यादुपात्य ).

निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥ आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥

चतुर्भुजः भीमगदितं श्रुत्वा, 'द्रौपद्याश्च वचन' मिति शेषः । सख्युरर्जुनस्य वदनमवलोक्य मंदस्मितं कुर्वन्निदमाहेत्येकान्वयः ॥ ५२ ॥

ई प्रकार भीमसेननु आडिद मातन्नू, द्रौपदिय मातन्नू चतुर्भुजनाद श्रीकृष्णनु केळि, तन्न मित्रनाद अर्जुनन कडेगे मोरेमाडि, मुगुळनगेयिंद नगुववनंते ईप्रकारवागि मातनाडिदनु ॥ ५२ ॥

श्रीभगवानुवाच—ब्रह्मबंधुर्नहंतव्य आततायी वधार्हणः ॥ ममैवोभयमाम्नातं परिपाह्यनुशासनं ॥ ५३ ॥
कुरु प्रतिश्रुतं सत्यं यत्तत्सांत्वयता प्रियां ॥ प्रियं च भीमसेनस्य पांचाल्या मह्यमेव च ॥ ५४ ॥

हन-नहनेत्युभयं मयैवाम्नातं-अभिहितं यस्मात्तस्मादनुशासनमात्मवचनं परिपाहीत्यन्वयः ॥ ५३ ॥ ५४ ॥

( श्रीकृष्णनु अंदद्दु ) अर्जुनने, ब्राह्मणाधमनन्नु कोल्लगूडदु. आर्ततायियन्नु क्षत्रियनादवनु कोल्ललेबेकु. ननगंतू कोल्लुवदू, बिडुवदू एरडू सम्मतवादद्दु. नीनु निन्न प्रतिज्ञेयन्नु रक्षिसतक्कद्दु, याव निन्न हेंडतियन्नु समाधानमाडुवाग्गे अश्वत्थामन शिरस्सन्नु तंदु कोडुवेनेंदु प्रतिज्ञेयन्नु माडिरुवियो अदन्नु संरक्षणे माडिकोळ्ळतक्कद्दु हागू भीमसेननन्नू प्रीतिबडिसतक्कद्दु. इदल्लदे नन्नन्नू संतोषबडिसतक्कद्दु ॥ ५३ ॥ ॥ ५४ ॥

सूत उवाच—अर्जुनः सहसाज्ञाय हरेर्हार्दमथासिना ॥ मणिं जहार मूर्धन्यं द्विजस्य सहमूर्धजं ॥५५॥

अर्जुनः सहसा-झटिति हरेः त्हदि स्थितं आज्ञाय-सम्यक्ज्ञात्वा क्षुरधारेण असिना द्विजस्य सहमूर्धजं-केशैःसहितं मूर्धन्यं-मूर्ध्नासहोत्पन्नं मणिं जहारेत्यन्वयः ॥ ५५ ॥

( सूतनु अंदद्दु ) ई रीतियागि श्रीकृष्णन मातुगळन्नु केळि, अर्जुननु आकूडले अवन ( कृष्णन ) मनोभिप्रायवन्नु तिळिदु, तीक्ष्णवाद खड्गदिन्द आ ब्राह्मणन शरीरदिंद सहितवागि हुट्टिद शिरोरत्नवन्नु कूदलुगळिंद सहितवागि कत्ति तेगेदुकोंडनु ॥ ५५ ॥

विमुच्य रशनाबद्धं बालहत्या हतप्रभं ॥ तेजसा मणिना हीनं शिबिरान्निरयापयत ॥ ५६ ॥

१ शस्त्रवन्नु कैय्यल्लि हिडदनु वेदांतबल्ल ब्राह्मणनादरू अवनन्नु क्षत्रियनु कोल्ललेबेकु.

तेजसा-सामर्थ्येन शरीरकांत्या वा, रत्नेन च रहितं, शिशूनां वधेन हतप्रभं, अलक्ष्मीनिधानं, रज्ज्वा बद्धं विमुच्य, शिबिरान्निरवापयत्-शवनिर्गमनवन्निष्कासयामासेत्येकान्वयः ॥ ५६ ॥

आनंतर शरीर सामर्थ्यदिंदलू, शरीर कांतियिंदलू हीननाद, शिरोरत्नविल्लदे बालकर वधेयिंद अलक्ष्मियु इरुवदके मूलस्थाननाद अश्वत्थामनन्नु हग्गदिंद बिचि तम्म बिडारदिंद शववन्नु होरगे एळेदंते ( अर्जुननु ) एळेदोगेदनु ॥ ५६ ॥

**बंधनं द्रविणादानं स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबंधूनां वधो नान्येस्ति दैहिकः ५७ ॥**

**इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे सप्तमोध्यायः ॥ ७ ॥**

ब्रह्मबंधूनां प्राणत्यागलक्षणमरणप्रतिनिधिरयं वध इत्याह बंधनमिति । ब्रह्मबंधूनामेष एव वधः-वधप्रतिनिधिः, अन्यो दैहिको-नेत्रोत्पाटनादिको नास्तीत्यन्वयः । शास्त्रविहितो नास्तीति भावः । कोसाविति तदाह बंधनमिति । पाशेन करौ पृष्ठे कृत्वा बंधनं, द्रविणादानं-हिरण्याहरणं, स्थानान्निर्यापणं-स्वदेशान्निर्यापणं । 'तथा' शब्दः प्रत्येकमभिसंबद्धयितव्यः । 'सांत्वयन्' इत्यारभ्य 'नान्योस्ति दैहिक' इत्यंतं यदुक्तं तदिदं द्रौणिना स्वप्ने दृष्टं संकथितं, अन्यथा ग्रंथांतरविरोधः । तत्र भीमेन कृतमित्युक्तत्वादिति ज्ञातव्यं ॥ ५७ ॥

इति श्रीमद्भागवते महापुराणे प्रथमस्कंधे पदरत्नावल्यां टीकायां सप्तमोध्यायः ॥ ७ ॥

( इदरिंद अर्जुनन प्रतिज्ञेयु हेगे सत्यवायितु हागू द्रौपदी-भीमसेनरिगू धर्मराज-श्रीष्णरिगू हेगे तृप्तियायितु एंदरे ) ब्राह्मणरु ( अवरन्नु ) कोल्लतक्क अपराधवन्नु माडिदरू अवरन्नु देहदिंद कोल्लदे अदके बदलागि माडतक्क बंधनवु इदे एंदु तोरिसुवरु-ब्राह्मणर कैगळन्नु हिंदे माडि हग्गदिंद कट्टुवदु, अवरिरतक्क ( अवरन्नु ) देशदिंद होरगे हाकुवदु, अवरल्लिद्द द्रव्यवन्नु कसकोळ्ळुवदु इष्टरिंदले ब्राह्मणर वधेमाडिदंतायितु, इदरहोर्तु देहसंबंधवाद कण्णु कित्तिसोण, शिरच्छेद मुंताद वधयन्नु सर्वथा माडगूडदु. ई अध्यायद हदिनैदनेय श्लोकदल्लिरुव 'सांत्वयन्' इल्लिदारंभिसि ई अध्यायद समाप्तिय वरेगू अश्वत्थामन स्वप्नद कथेयेंदु हेळतक्कद्दु, इल्लदिद्दरे भीमसेनानिंदले ई हिंदे हेळिद संगतियु जरिगिरुवदेंब भारतोक्तिगे विरोधवागुवदु ॥ ५७ ॥

हीगे श्रीमद्भागवतवेंब महापुराणदल्लि प्रथमस्कंधदल्लि मूल मत्तु टीकेगळिगनुसारवागि अलंकरिसिरुवंथ 'सुखार्थबोधिनि'
एंब कन्नड टीकेयल्लि एळने अध्यायवु मुगिदितु ॥ ७ ॥

सूत उवाच—पुत्रशोकातुराः सर्वे पांडवाः सहकृष्णया ॥ स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकं ॥१॥

भक्तिविधानार्थं भक्तवात्सल्यार्थाचिंत्यमाहात्म्यं मुरारेर्निरूप्यतेऽस्मिन्नध्याये । तदर्थं मृतानां यत्कर्तव्यं लौकिकं तत् उच्यते । पुत्रशोकेति । सर्वे पांडवाः मृतानां-प्राणवियोगं प्राप्तानां स्वानां बंधूनां यत्कृत्यं निर्हरणादिकं तच्चक्रुरित्यन्वयः ॥ १ ॥

ई अध्यायदल्लि श्रीहरियल्लि भक्तियन्नु माडतक्कद्दु हेळुवदक्कागि परमात्मन भक्तरल्लिरतक्क अंतःकरणवे मोदलाद अचिंत्य माहात्म्येयु हेळल्पड्डुवदु मत्तु इदक्के अनुकूलवाद कौरवरल्लि सत्तिरुव जनगळ देशेयिंद माडतक्क कृत्यगळन्नु हेळुवरु–( सूतनु अंदद्दु ) मक्कळ दुःखदिंद व्यसनपडतक्क पांडवरु द्रौपदियिंद सहितरागि ( गंगातीरक्के होगि ) रणरंगदल्लि प्राणपरित्यागमाडिद स्वकीयराद जनगळिगे माडतक्क ' शवदहन ' मुंताद कृत्यगळन्नु माडिदरु ॥ १ ॥

अथो निशामयामास कृष्णायै भगवान्पुरा ॥ पतितायाः पादमूले रुदंत्या यत्प्रतिश्रुतं ॥ २ ॥

' भीमहतान् दर्शय ' इति पुरा यत्प्रतिश्रुतं तदस्यै द्रौपद्यै निशामयामास-दर्शयांचकारेत्यन्वयः ॥ २ ॥

ई समयदल्लि हिंदक्के द्रौपदियु तन्न पाददल्लि बिद्दु होळेकोंडाग्ये श्रीकृष्णनु अवळन्नु कुरितु प्रतिज्ञेयन्नु माडिदंते भीमसेनन गदाप्रहरदिंद मृतराद दुर्योधनादिगळन्नु द्रौपदिगे तोरिसिदनु ॥ २ ॥

पश्य राज्ञ्यरिदारांस्ते रुदतो मुक्तमूर्धजान् ॥ आलिंग्य स्वपतीन् भीमगदाभग्नोरुवक्षसः ॥ ३ ॥

हे राज्ञि, ते-तव, अरिदारान्-शत्रुभार्याः, मुक्तमूर्धजान्-मुक्तकेशीः, भीमस्य गदया भग्ना ऊरवः-उत्संगाश्च वक्षांसि च येषां ते तथोक्ताः । उरूणि-विस्तीर्णानि वक्षांसीति वा ॥ ३ ॥

हेगे तोरिसिदनेंदरे हेळुवरु–( कृष्णनु अंदद्दु ) हे राजभार्यळाद द्रौपदिये, भीमसेनन गदाप्रहारदिंद शीळल्पट्ट तोडेगळु, यदेगळु उळ्ळ दुर्योधन, दुःशासन मुंताद तम्म तम्म पतिगळ शववन्नु आलिंगनमाडिकोंडु, तलेय मेलिन कुदलुगळन्नु हारिबिकोंडु, रोदनमाडतक्क निन्न शत्रुगळ हेंडंदिरन्नु नोडु, एंदु तोरिसिदनु ॥ ३ ॥

अथ ते संपरेतानां स्वानामुदकमिच्छतां ॥ दातुं सकृष्णा गंगायां पुरस्कृत्य ययुः स्त्रियः ॥ ४ ॥

स्त्रियः पुरस्कृत्य संपरेता-युद्धे मृताः, सकृष्णा-द्रौपद्यासहिताः, कृष्णेन-यादवेंद्रेण सहिता वा ॥ ४ ॥

आनंतर तम्म स्वकीयराद, मृतरागि उदकवन्नु अपेक्षिसतक्क जनगळिगे उदकवन्नु कोडुवदक्कागि श्रीकृष्णनिंद सहितरागि दुर्योधनादिगळ हेंडंदिरन्नु मुंदे माडिकोंडु, पांडवरु गंगातीरवन्नु कुरितु होदरु ॥ ४ ॥

ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ॥ आप्लुता हरिपादब्जरजःपूतसरिज्जले ॥ ५ ॥

ते पांडवास्तिलोदकं निनीय-दत्वा, भृशं विलप्य-परिदेवनलक्षणं रोदनं कृत्वा पश्चाद्धरेः पादपद्मपरागेण पूते-शुद्धे, सरितो-गंगायाः जले आप्लुताः-स्नाता अभूवन्नित्यन्वयः ॥ ५ ॥

अल्लि एल्लरू तिलोदकवन्नु कोट्टु, मृतराद जनगळन्नुकुरितु बहुवेळे दुःखपट्टु, श्रीहरिय पादपद्मद धूळियिंद पवित्रळाद गंगानदिय उदकदल्लि स्नानमाडिदरु ॥५॥

तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजं ॥ गांधारीं पुत्रशोकार्तां पृथां कृष्णां च माधवः ॥ ६ ॥

अनुजेन-संजयेन सहवर्तमानं ॥ ६ ॥

आमेले पांडवरिंद कूडि श्रीकृष्णनु हस्तिनापुरक्के बंदु, अल्लिद्द संजयनिंद कूडि कुळितिरुव कुरुकुलक्के यजमाननाद धृतराष्ट्रराजनन्नू, मकळ दुःखदिंद व्यसनपडतक्क गांधारियन्नु, कुंतियन्नु मत्तु द्रौपदियन्नु समाधानमाडिदनु ॥ ६ ॥

सांत्वयामास मुनिभिर्हतपुत्रांश्शुचार्पितान् ॥ भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियां ॥ ७ ॥

मुनिभिः सह ' हताः पुत्रा येषां ते तथा ' तान् भूतेषु-प्राणिषु कालरूपस्य हरेः गतिं विक्रममप्रतिक्रियामपरिहार्यां दर्शयन् ॥ ७ ॥

इदल्लदे, आ पुत्रशोकदिंद दुःखबडतक्क जनगळन्नु प्राणिगळल्लि कालरूपियाद श्रीहरिय एरडने उपायगळिंद तप्पिसुवदक्के बारदंथ इच्छये मुख्यवाददेंदु मुनिगळ बायिंद हेळिसि समाधानमाडिसिदनु ॥ ७ ॥

घातयित्वा सतो राज्ञः कचस्पर्शहतायुषः ॥ साधयित्वाऽजातशत्रोः स्वराज्यं कितवैर्हृतं ॥ ८ ॥

घातयित्वा-वधं कारयित्वा 'पांडवै' रिति शेषः । कचानां-केशानां स्पर्शेन हतानि-नष्टानि आयूंषि येषां ते तथा तान् । अजातः-सुयोधनः शत्रुर्यस्य सः तथोक्तः । तथाचोक्तं-'सुयोधनादयः सर्वे त्वजाता जज्ञिरे घटात् । व्यासेनानंतवीर्येण मार्तंडाधिकतेजसा' इति प्रयोगात् । न जातः शत्रुर्यस्य स तथोक्त इति केचित् । कितवैश्चोरप्रायैर्दुर्योधनादिभिः ॥ ८ ॥

सूर्यन किंतलू अधिक तेजःसुळ्ळ महासमर्थराद वेदव्यासरिंद दुर्योधनने मोदलादवरु तुप्पद कोडदिंद हुट्टिदकारण अवरु 'अजात' रेनिसुवरु; आ अजातरेनिसिकोंड दुर्योधनने मोदलादवरु शत्रुगळागिवुळ्ळ, अथवा यावनिगे शत्रुगळे इल्लवो आ धर्मराजन शत्रुगळिंद अपहार माडल्पट्ट राज्यवन्नु द्रौपदिय कूदलुगळ स्पर्शदिंदले आयुष्यवन्नु कळकोंड दुर्योधनादिगळन्नु कोल्लिसि तंदुकोट्टु ॥ ८ ॥

याजयित्वाऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ॥ तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ९ ॥

मध्यमाधमकल्पयोरुत्तमकल्पकैः, शतं मन्यवः-क्रतवो यस्य स तथा, तस्येंद्रस्य यशो वामनावतारे हरिर्यथा ततान तथाऽतनोत् । तनु-विस्तारे ९

धर्मराजन कडिंयिंद अत्युत्तमवाद मूरु अश्वमेध यागगळन्नु माडिसि, नूरु अश्वमेधगळन्नु माडिद देवेंद्रन यशःसन्नु वामनावतारकालक्के हेगे प्रसिद्धिपडिसिदनो अदरंतेये ई धर्मराजन कीर्तियन्नु श्रीकृष्णनु प्रसिद्धिपडिसिदनु ॥ ९ ॥

आमंत्र्य पांडुपुत्रांश्च शैनेयोद्धवसंयुतः ॥ द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ १० ॥
गंतुं कृतमतिर्ब्रह्मन द्वारकां रथमास्थितः ॥ उपलेभेऽभिधावंतीमुत्तरां भयविव्हलां ॥ ११ ॥

१ त्रिभिस्त्रिगुणफलैः, 'पंचभिः' इति शेषः । पंचानां त्रिगुणफलकत्वोपपादनायैव 'उत्तमकल्पकैः' इत्युक्तं । दक्षिणादिविषये विहितोत्तमकल्पैरित्यर्थः । यथोक्तं श्रीमन्महाभारत-तात्पर्यनिर्णये—तद्यज्ञपंचकमजस्त्रिगुणां स एभ्यः सद्दक्षिणां क्रतुपतिर्निखिलामवाप्य ॥ चक्रेऽश्वमेधत्रयमेकमेकं तेषां हरिर्बहुसुवर्णकनामधेयं" इति । अयं भाविकथासंक्षेपः ॥ ( यादुपत्य )

